# भामिनीविलासम् ।

श्रीमत्पण्डितराज-जगन्नाथविरचितम् ।

पण्डितकुलपतिना,

बि, ए, उपाधिधारिणा

श्रीमज्जीवानन्द-विद्यासागर-भट्टाचार्य्येण

विरचितया व्याख्यया समुद्भासितम् ।

तदात्मजाभ्यां

पण्डित-श्रीआशुबोध-विद्याभूषण-

पण्डित-श्रीनित्यबोध-विद्यारत्नाभ्यां

परिवर्द्धितटीकया प्रतिसंस्कृत्य प्रकाशितम् ।

तृतीयसंस्करणम् ।

कलिकातामहानगर्य्याम्,

"वाचस्पत्ययन्त्रे"

मुद्रितम् ।

ई १८९६ ।

প্রকাশক—{ পণ্ডিত-শ্রীআশুবোধ-বিদ্যাভূষণ
তথা
পণ্ডিত-শ্রীনিত্যবোধ-বিদ্যারত্ন।

প্রাপ্তিস্থান—{ ২নং, রমানাথ মজুমদার ষ্ট্রীট্, আম্হার্ষ্ট-
ষ্ট্রীট্ পোষ্ট-অফিস, কলিকাতা।

প্রিণ্টার—বি, বি, মুখর্জ্জী।
২ নং, রমানাথ মজুমদার ষ্ট্রীট্, কলিকাতা।

# भामिनीविलासम् ।

## प्रथमविलासः ।

दिगन्ते श्रूयन्ते मदमलिनगण्डाः करटिनः
करिण्यः कारुण्यास्पदमसमशीलाः खलु मृगाः ।
इदानीं लोकेऽस्मिन्ननुपमशिखानां पुनरयं
नखानां पाण्डित्यं प्रकटयतु कस्मिन् मृगपतिः ? ॥ १ ॥

भामिनीति ।—भामिन्याः स्वप्रियायाः, विलासाय प्रमोदाय इदमिति भामिनीविलासम् । इदमर्थे अण्प्रत्ययः । पण्डितवरः श्रीमान् जगन्नाथः स्वप्रियाप्रमोदार्थं तदाख्यया काव्यमिदं रचितवान् इति भावः ।

दिगन्ते इति ।—मदेन दानवारिणा, मलिनाः गण्डाः कपोला येषां तथाभूताः, मदस्राविण इति भावः, करटिनः हस्तिनः, दिगन्ते दिशामन्ते, श्रूयन्ते, भयात् पलायिता इति भावः, करिण्यः हस्तिन्यः, कारुण्यस्य करुणायाः, कृपाया इत्यर्थः, "कारुण्यं करुणा घृणा" इत्यमरः । आस्पदं पात्रं, स्त्रीत्वाद-वध्या इति भावः, तथा च स्मृतिः,—"अवध्याश्च स्त्रियं प्राहुस्तिर्य्यग्-योनिगतामपि" इति । मृगाः हरिणादयः, असमम् अतुल्यं, शीलं बलं येषां तथाविधाः, खलु निश्चितं, स्वतः समबलत्वाभावात् क्षुद्रत्वेन अगण्या इति भावः ; अयं पुनर्मृगपतिः सिंहः, इदानीं समकक्षालाभे इति भावः, अस्मिन् लोके जगति, अनुपमा अतुल्याः, शिखा अग्रभागा येषां तथोक्तानां तीक्ष्णाग्राणामिति यावत्, नखानां पाण्डित्यं नैपुण्यं, विदारणपाटवमिति यावत्, कस्मिन् वस्तुनि प्राणिनि वा, प्रकटयतु ? विस्तारयतु ? नास्य विक्रमपात्रमस्तीति भावः । अत्र अप्रस्तुतसिंहवृत्तान्तेन कस्यचिन्महापुरुष-वृत्तान्तस्योपस्थितेः समात् समप्रतीतिरूपाप्रस्तुतप्रशंसाऽलङ्कारः । तथा च दर्पणः, "क्वचित् विशेषः सामान्यात् सामान्यं वा विशेषतः । कार्य्यान्निमित्तं कार्य्यञ्च हेतोरथ समात् समम् ॥ अप्रस्तुतात् प्रस्तुतञ्चेत् गम्यते पञ्चधा ततः ।

पुरा सरसि मानसे विकचसारसालिस्खलत्-
परागसुरभीकृते पयसि यस्य यातं वयः।
स पल्वलजलेऽधुना मिलदनेकभेकाकुले
मरालकुलनायकः कथय रे! कथं वर्त्तताम्?॥ २॥

तृष्णालोलविलोचने कलयति प्राचीं चकोरीगणे
मौनं मुञ्चति किञ्च कैरवकुले कामे धनुर्धुन्वति।
माने मानवतीजनस्य सपदि प्रस्थातुकामेऽधुना
धातः! किन्नु विधौ विधातुमुचितो धाराधराडम्बरः?॥ ३॥

अप्रस्तुतप्रशंसा स्यात्—" इति। शिखरिणीवृत्तं—"रसैरुद्रैश्छिन्ना यमनसभला गः शिखरिणी" इति तल्लक्षणात्॥ १॥

पुरेति।—पुरा पूर्वं, मानसे सरसि यस्य विकचाः प्रस्फुटाः, याः सारसालयः पद्मश्रेणयः, "सारसं सरसीरुहम्" इत्यमरः; ताभ्यः स्खलद्भिः स्रवद्भिः, परागैः रजोभिः, "परागः कौसुमं रजः" इत्यमरः; सुरभीकृतं सुवासितं तस्मिन्, पयसि जले, वयः दीर्घजीवनकालः, यातं विशेषेण गतं, सुखेनातिक्रान्तमित्यर्थः, स मरालकुलनायकः राजहंसश्रेष्ठः, अधुना साम्प्रतं, मिलद्भिः सङ्गच्छद्भिः, अनेकैः भेकैः मण्डूकैः आकुले व्याप्ते, पल्वलजले क्षुद्रजलाशयनीरे, कथं केन प्रकारेण, वर्त्तताम्? तिष्ठतु? सम्भावनायां लोट्; नैव वर्तितुं शक्नोतीति सम्भावयामीति भावः; रे! कथय यदत्र युक्तं तत् ब्रूहीत्यर्थः। अत्रापि अप्रस्तुतेन मरालश्रेष्ठवर्णनेन प्रस्तुतस्य कस्यचित् साधोर्वृत्तान्तस्यापरिस्थितेः समात् समप्रतीतिरूपाप्रस्तुतप्रशंसा। पृथ्वीवृत्तं, "जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः" इति तल्लक्षणात्॥ २॥

तृष्णेति।—धातः! हे विधे! चकोरीणां गणः चकोरीगणः तस्मिन्, तृष्णया पिपासया, लोले विलोचने यस्य तादृशे, पिपासाकुलनेत्रे सति इत्यर्थः, प्राचीं पूर्वां दिशं, कलयति पश्यति सति, चन्द्रकिरणपानार्थमिति भावः, किञ्च, कैरवाणां कुले कुमुदवृन्दे, मौनं मुकुलीभावमित्यर्थः, मुञ्चति त्यजति, चन्द्रोदयात् विकासोन्मुखे सति इति यावत्, कामे मदने, धनुः धुन्वति कम्पयति, विरहिजनपीडनार्थमिति भावः, अधुना इदानीं,

अयि दलदरविन्द ! स्यन्दमानं मरन्दं
तव किमपि लिहन्तो मञ्जु गुञ्जन्तु भृङ्गाः ।
दिशि दिशि निरपेक्षस्तावकीनं विवृण्वन्
परिमलमयमन्यो बान्धवो गन्धवाहः ॥ ४ ॥

समुपागतवति दैवादवहेलां कुटज ! मधुकरे मा गाः ।
मकरन्दतुन्दिलानामरविन्दानामयं महामान्यः ॥ ५ ॥

मानवतीजनस्य मानिनीजनस्य, मानः कान्तं प्रति कोपः, "मानः कोपः स तु द्वेधा प्रणयेर्ष्यासमुद्भवः" इति दर्पणः ; सपदि सद्यः, प्रस्थातुं कामो यस्य तस्मिन् प्रस्थातुकामे गन्तुकामे सति, मानिनीनां कामविजृम्भणात् मानापगमे जाते सतीति भावः, विधौ चन्द्रे, धाराधरस्य जलदस्य, आडम्बरः विस्तारः, विधातुं कर्त्तुम्, उचितः युक्तः, किम् ? नु इति वितर्के, नैव युक्त इत्यहं तर्कयामीत्यर्थः । अत्र अप्रस्तुतेन विधिकृतधाराधराडम्बर-जनितविधुतिरोधानेन कस्यचित् प्रस्तुतस्य प्रियवस्तुनो विविधप्रमोदहेतु-भूतस्य वियोगोपस्थितेः पूर्ववत् समात् समप्रतीतिरूपाप्रस्तुतप्रशंसा । शार्दूलविक्रीडितं वृत्तं, "सूर्य्याश्वैर्यदि मः सजौ सततगाः शार्दूल-विक्रीडितम्" इति तल्लक्षणात् ॥ ३ ॥

अयीति ।—अयीति कोमलामन्त्रणे । अयि दलदरविन्द ! हे विकसत्पङ्कज ! तव स्यन्दमानं स्रवन्तं, मरन्दं मकरन्दं, रसमिति यावत्, लिहन्तः पिबन्तः, भृङ्गाः भ्रमराः, किमपि अस्फुटमित्यर्थः, मञ्जु मनोहरं, श्रुतिप्रीतिकरमिति यावत्, गुञ्जन्तु कवन्तु, किन्तु अयम् अन्यो बान्धवः गन्धवाहः वायुः, निरपेक्षः निराकाङ्क्षः, त्वत्कृतप्रत्युपकारनिस्पृहः सन् इति यावत्, दिशि दिशि सर्वासु दिक्ष्वित्यर्थः, तव अयं तावकीनः तं त्वत्सम्बन्धिनमित्यर्थः, परिमलं सौरभं, विवृण्वन् विस्तारयन्, वहतीति शेषः । एतेन भृङ्गाणां कृत्रिमबन्धुत्वं, गन्धवहस्य तु अकृत्रिमबान्धवत्वं व्यज्यते ; तदनेन वृत्तान्तेना-प्रस्तुतेन कृत्रिमाकृत्रिममित्रयोर्व्यवहाररूपप्रस्तुतोपस्थितेः पूर्ववदेवालङ्कारः । मालिनीवृत्तं, "ननमयययुतेयं मालिनी भोगिलोकैः" इति तल्लक्षणात् ॥ ४ ॥

समुपागतवतीति ।—कुटज ! हे पुष्पविशेष ! दैवात् सहसा, मधुकरे भ्रमरे, समुपागतवति सति अवहेलाम् अवज्ञां, मा गाः न कुर्वित्यर्थः,

तावत् कोकिल ! विरसान् यापय दिवसान् वनान्तरे निवसन् ।
यावन्मिलदलिमालः कोऽपि रसालः समुल्लसति ॥ ६ ॥

कमलिनि ! मलिनीकरोषि चेतः
किमिति बकैरवहेलिताऽनभिज्ञैः ? ।
परिणतमकरन्दमार्मिकास्ते
जगति भवन्तु चिरायुषो मिलिन्दाः ॥ ७ ॥

अयं मधुकरः, मकरन्देन पुष्परसेन,"मकरन्दः पुष्परसः" इत्यमरः ; तुन्दिलाः भरिता इत्यर्थः, तेषां मकरन्दपूर्णानामित्यर्थः, अरविन्दानां कमलानां, महामान्यः अतीवादरणीयः । अत्राप्रस्तुतेन मधुकरवृत्तान्तेन प्रस्तुतस्य कस्यचित् मानिनं जनमनादरेण पश्यतो जनस्य वृत्तान्तोपस्थितेः पूर्ववदेवालङ्कारः । गीतिवृत्तम्—"आर्य्या प्रथमार्द्धसमं परार्द्धमीरितं गीतिः" इति तल्लक्षणात् ॥ ५ ॥

तावदिति ।—हे कोकिल ! मिलन्ती सङ्गच्छन्ती, अलिमाला भ्रमरमाला यस्मिन् तथाभूतः, कोऽपि अनिर्वचनीयः, रसालः चूतः, "आम्रश्चूतो रसाल" इत्यमरः ; यावत् समुल्लसति समुल्लासते, तावत् वनान्तरे वनमध्ये, निवसन् निगूढ़ वसन्नित्यर्थः, विरसान् रसवर्जितान् निरुत्सवानिति भावः, दिवसान् वासरान्, ग्रीष्मादीनिति भावः, यापय अतिवाहय । अत्राप्रस्तुतकोकिलवर्णनेन कस्यचित् प्रस्तुतस्य सुसमयं प्रतीक्षमाणस्य दुःखं जीवत उपस्थितेः समप्रतीतिरूपाप्रस्तुतप्रशंसा । आर्य्या वृत्तम् ॥ ६ ॥

कमलिनीति ।—हे कमलिनि ! अवहेलिता विलासिता, तस्यामनभिज्ञाः ते विलासरहितैरिति यावत्, बकैः, सहचारिभिरिति शेषः, चेतः चित्तं, किमिति वृथा, मलिनीकरोषि ? कलुषीकरोषि ? एभिः सह सङ्गे तव चित्तविनोदो न भवितेति भावः ; परिणतस्य परिपुष्टस्य, मकरन्दस्य तव पुष्पमधुनः,मर्म जानन्तीति मार्मिकाः मर्मज्ञा इत्यर्थः,तत्त्वविद इति यावत्, ते प्रसिद्धाः, मिलिन्दा भ्रमराः, जगति चिरायुषः चिरजीविनः, भवन्तु, तैरेव तव चित्तविनोदो भविष्यतीति भावः । अत्राप्रस्तुतकमलिनी-बकमिलिन्दविवरणेन प्रस्तुतस्य कस्यचिदयोग्यसङ्गपरिहारेण योग्यसङ्गमस्योप-

नितरां नीचोऽस्मीति त्वं खेदं कूप ! मा कदाऽपि कृथाः।
अत्यन्तसरसहृदयो यतः परेषां गुणग्रहीताऽसि ॥ ८ ॥
येनामन्दमरन्दे दलदरविन्दे दिनान्यनायिषत।
कुटजे खलु तेनेहातेने हा ! मधुकरेण कथम् ? ॥ ९ ॥
अयि मलयज ! महिमाऽयं कस्य गिरामस्तु विषयस्ते ?।
उद्गिरतो यद्गरलं फणिनः पुष्णासि परिमलोद्गारैः ॥ १० ॥

स्थितेः समात् समग्रनीतिरूपाप्रस्तुतप्रशंसा। पुष्पिताग्रावृत्तम्—"अयुजि न-युगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रा" इति लक्षणात्॥७॥

नितरामिति।—हे कूप ! त्वं नितरामतिशयेन, नीचोऽस्मि नतो भवामि, इति, धियेति शेषः, कदाऽपि खेदं विषादं, मा कृथाः न कुरु ; किमिति ? आह—यतः अस्मात्, अत्यन्तं सरसम् आर्द्रं सजलञ्च, हृदयं चित्तम् अन्तरञ्च यस्य तथाभूतस्त्वं, परेषाम् अन्येषां, गुणान् ग्रहीतुं शीलमस्येति गुणग्रहीता गुणग्राही, गुणः कलसाकर्षणरज्जुः, तद्गृहीता च, असि भवसि ; यो नतः सन् सरसहृदयः परगुणग्राही भवति, स एव महानिति भावः। अत्राप्रस्तुतेन कूपवृत्तान्तेन कस्यचित् क्षुद्रजनस्य विनयावनतस्य सरसहृदयतथा परगुणग्राहिणः उपस्थितेः पूर्ववदप्रस्तुत-प्रशंसाऽलङ्कारः। गीतिवृत्तम् ॥ ८ ॥

येनेति।—येन अमन्दः अक्षीणः, मरन्दः मधुः यत्र यस्य वा तस्मिन्, दलदरविन्दे विकसत्सरोजे, दिनानि अनायिषत अतिवाहितानि, तेन मधुकरेण भ्रमरेण,हा ! खेदे,इह अस्मिन्,कुटजे तदाख्ये कुसुमे,ईहा चेष्टा, लालसेति भावः, कथं केन प्रकारेण, आतेने खलु ? कृता ? इत्यर्थः, अयुक्तमेतत्तस्येति भावः। अत्राप्रस्तुतेन मधुकरस्य अरविन्दपरित्यागेन कुटजलुब्धस्य वृत्तान्तेन प्रस्तुतस्य कस्यचित् उत्कृष्टपरित्यागेन निकृष्टा-श्रयणस्योपस्थितेः पूर्ववदेवालङ्कारः। आर्या वृत्तं—"यस्याः प्रथमे द्वादश मात्रास्तथा तृतीयेऽपि। अष्टादश द्वितीये पञ्चदश चतुर्थके साऽऽर्या ॥" इति लक्षणात् ॥ ९ ॥

अयीति।—अयीति कोमलामन्त्रणे। अयि मलयज ! हे चन्दन ! ते

पाटीर ! तव पटीयान् कः परिपाटीमिमामुरीकर्त्तुम् ?।
यत् पिंषतामपि नृणां पिष्टोऽपि तनोषि परिमलैः पुष्टिम् ॥११॥
नीरक्षीरविवेके हंसालसमालस्यं त्वमेव तनुषे चेत्।
विश्वस्मिन्नधुनाऽन्यः कुलव्रतं पालयिष्यति कः ? ॥ १२ ॥

तव अयं महिमा औदार्य्यं, कस्य जनस्य, गिरां वाचां, विषयः वक्तुं शक्य इति यावत्, अस्तु ? भवतु ? सम्भावनायां लोट्; न कस्यापि वाग्विषयो भवतीति सम्भावयामीत्यर्थः; यत् यस्मात्, गरलं विषम्, उद्गिरतः उद्वमतः, फणिनः भुजङ्गान्, परिमलोद्गारैः सौरभसञ्चारैः, पुष्णासि, ये गरलमुद्गीर्य्य त्वां दूषयन्ति, तानपि खलान् त्वं प्रीणासीति अतीवौदार्य्यं तवेति भावः। अत्राप्रस्तुतेन चन्दनवृत्तान्तेन पीड़यतोऽपि खलान् प्रीणयतः कस्यचित् प्रस्तुतस्योपस्थितेः समात् समप्रतीतिरूपाप्रस्तुतप्रशंसा। उद्गीति वृत्तम्—"आर्य्याशकलद्वितये विपरीते पुनरिहोद्गीतिः" इति लक्षणात् ॥१०

पाटीरेति।—पाटीर ! हे चन्दन ! को जनः, तव इमां परिपाटीं रीतिम्, उरीकर्तुम् अङ्गीकर्त्तुं, पटीयान् ? अतिशयेन पटुः ? न कोऽपि तव रीतिमनुसर्त्तुं शक्त इत्यर्थः, यत् यतः, त्वं पिष्टोऽपि घर्षितोऽपि, परिमलैः सौरभैः, पिंषतामपि पेषणं कुर्वतामपि, किमुतान्येषामित्यपिशब्दार्थः, नृणां मानवानां, पुष्टिं प्रीतिमित्यर्थः, तनोषि विस्तारयसि। अत्राप्रस्तुतेन चन्दनवृत्तान्तेन शत्रुपीड़ितस्यापि तदुपकृतिपरस्य कस्यचिन्महानुभावस्य प्रस्तुतस्योपस्थितेः समात् समप्रतीतिरूपाप्रस्तुतप्रशंसा। गीतिवृत्तम् ॥ ११ ॥

नीरेति।—हे हंस ! त्वमेव नीरञ्च क्षीरञ्च तयोर्विवेके पृथक्करणे, अलम् अत्यन्तम्, आलस्यम् अयत्नमिति यावत्, तनुषे चेत् करोषि यदि, तदा अन्यः त्वदितरः, कः विश्वस्मिन् संसारे, जगतीत्यर्थः, अधुना कुलव्रतं वंशनियमं, कुलक्रमागतरीतिमित्यर्थः, पालयिष्यति ? रक्षिष्यति ? न कोऽपीत्यर्थः। अत्राप्रस्तुतेन हंसवृत्तान्तेन सदसद्विवेकमकुर्वतः कस्यचित् प्रस्तुतस्य सज्जनस्योपस्थितेः समात् समप्रतीतिरूपाप्रस्तुतप्रशंसा। आर्य्यागीतिवृत्तम्—"आर्य्याप्रागृदलमन्तेऽधिकगुरु तादृक् परार्द्धमार्य्यागीतिः" इति लक्षणात् ॥ १२ ॥

उपरि करवालधाराकाराः क्रूरा भुजङ्गमपुङ्गवाः।
अन्तः साक्षात् द्राक्षादीक्षागुरवो जयन्ति केऽपि जनाः॥ १३॥

स्वच्छन्दं दलदरविन्द! ते मरन्दं
विन्दन्तो विदधतु गुञ्जितं मिलिन्दाः।
आमोदानथ हरिदन्तराणि नेतुं
नैवान्यो जगति समीरणात् प्रवीणः॥ १४॥

याते मय्यचिरान्निदाघमिहिरज्वालाशतैः शुष्कतां
गन्ता कं प्रति पान्थसन्ततिरसौ सन्तापमालाऽऽकुला?।

उपरीति।—उपरि बहिर्भागे इति यावत्, वचने इति भावः, करवालधाराकाराः असिधारासन्निभाः, अत एव क्रूरा दारुणाः, भुजङ्गमपुङ्गवाः आशीविषश्रेष्ठाः, तत्स्वरूपा इत्यर्थः, दारुणाशीविषवत् कटूक्तिकारिण इति भावः; अन्तः अन्तःकरणे, साक्षात् स्वयं, द्राक्षादीक्षागुरवः द्राक्षाफलस्य दीक्षायां माधुर्य्यशिक्षणे, गुरवः आचार्य्याः, उपदेष्टार इति यावत्, केऽपि जनाः जयन्ति सर्वोत्कर्षेण वर्त्तन्ते; पित्रादयो गुरुजनाः पुत्रादीन् कटुभाषणेन सततं ताडयन्तो यत् शिक्षयन्ति, तत् द्राक्षाफलवत् अतीव-मधुरमिति भावः। अत्र करवालधाराकारा इत्युपमा, भुजङ्गमपुङ्गवा इति रूपकमित्यनयोः संसृष्टिः। गीतिवृत्तम्॥ १३॥

स्वच्छन्दमिति।—दलदरविन्द! हे विकसत्कमल! मिलिन्दाः भृङ्गाः, ते तव, मरन्दं मधु, विन्दन्तः लभमानाः सन्तः, स्वच्छन्दं प्रकामं यथा तथा, गुञ्जितं गुञ्जनं, विदधतु कुर्वन्तु, तव मधुपानमत्ताः सानन्दं प्रकामगुञ्जनेन त्वां प्रीणयन्तु इति भावः; अथ किन्तु, समीरणात् वायोः, अन्यः, कोऽपीति शेषः, जगति आमोदान् त्वत्सौरभाणीति यावत्, हरिदन्तराणि दिगन्तराणि, नेतुं प्रापयितुं, नैव प्रवीणः नैव शक्त इत्यर्थः। अत्राप्रस्तुतेन मिलिन्द-समीरणवृत्तान्तेन कस्यचित् प्रस्तुतस्य कविमात्रकविमसुहृदोर्वृत्तान्तस्य प्रतीतेः समात् समप्रतीतिरूपाप्रस्तुतप्रशंसा। प्रहर्षिणीवृत्तं—"त्र्याशाभिर्मनजरगाः प्रहर्षिणीयम्" इति लक्षणात्॥ १४॥

याते इति।—मयि अचिरात् शीघ्रं, निदाघमिहिरज्वालाशतैः

एवं यस्य निरन्तराधिपटलैर्नित्यं वपुः क्षीयते
धन्यं जीवनमस्य मार्गसरसो धिग्वारिधीनां जनुः ॥ १५ ॥

आपेदिरेऽम्बरपथं परितः पतङ्गाः
भृङ्गा रसालमुकुलानि समाश्रयन्ते ।
सङ्कोचमञ्चति सरस्त्वयि दीनदीने
मीनो नु हन्त ! कतमां गतिमभ्युपैतु ? ॥ १६ ॥

ग्रीष्मरविकिरणशतैः, शुष्कतां याते शोषं गते सति, सन्तापमालाऽऽकुला सन्तापसंहतिकातरा, असौ पान्थानां पथिकानां, सन्ततिः समूहः, कं, जलाशयमिति शेषः, प्रति उद्दिश्येत्यर्थः, गन्ता ? गमिष्यति ? एवम् इत्थं, निरन्तराणि अविच्छिन्नानि,आधीनां मानसीनां व्यथानां,"पुंस्याधिर्मानसी व्यथा"इत्यमरः ; पटलानि सङ्घाः तैः, यस्य वपुः शरीरं, नित्यं सततं,क्षीयते क्षयं गच्छति, अस्य मार्गसरसः मार्गस्थितसरोवरस्य, जीवनं प्राणनं जलञ्च, धन्यं श्लाघ्यं, वारिधीनां समुद्राणां, जनुः जन्म, "जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भवः" इत्यमरः ; धिक् निन्दामीत्यर्थः, "धिङ्निर्भर्त्सननिन्दयोः" इत्यमरः ; अपेयत्वादिति भावः । अत्राप्रस्तुतयोर्मार्गसरो-वारिध्योर्वृत्तान्तेन प्रस्तुतयोः परार्थप्रवृत्त-कृपणयोर्वृत्तान्तोपस्थितेः समात् सम-प्रतीतिरूपाप्रस्तुतप्रशंसा । शार्दूलविक्रीडितं वृत्तं—"सूर्य्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितम्" इति तल्लक्षणात् ॥ १५ ॥

आपेदिरे इति ।—हे सरः ! दीनेषु दुःखितेषु जनेषु, दीनं दयार्द्रमित्यर्थः तस्मिन्, त्वयि सङ्कोचं क्षयमित्यर्थः, अञ्चति गच्छति सति, शुष्यति सतीत्यर्थः, पतङ्गाः पक्षिणः, त्वच्चारिण इति भावः,"पतङ्गौ पक्षिसूर्य्यौ च" इत्यमरः ; परितः समन्तात्, अम्बरपथम् आकाशमार्गम्, आपेदिरे गताः इत्यर्थः, भृङ्गाः सरोजचारिण इति भावः, रसालमुकुलानि आम्रमुकुलानि, समाश्रयन्ते गच्छन्ति, पक्षिणां भ्रमराणाञ्च गत्यन्तरमस्तीति भावः ; नु वितर्के, हन्त खेदे, मीनः मत्स्यः, कतमां गतिम् उपायम्, अभ्युपैतु ? प्राप्नोतु ? न कामपीत्यर्थः,मीनस्य गतिर्नास्तीति भावः। अत्राप्रस्तुतेन सरःपतङ्ग-भृङ्ग-मीनानां वृत्तान्तेन प्रस्तुतस्य दीनपालकजन-तदाश्रितलोकाय-

मधुप इव मारुतेऽस्मिन् मा सौरभलोभमम्बुजिनि ! मंस्थाः ।
लोकानामेव मुदे महितोऽप्यात्माऽमुनाऽर्थितां नीतः ॥ १७ ॥
गुञ्जति मञ्जु मिलिन्दे मा मालति ! मौनमुपयासीः ।
शिरसा वदान्यगुरवः सादरमेनं वहन्ति सुरतरवः ॥ १८ ॥
यैस्त्वं गुणगणवानपि सतां द्विजिह्वैरसेव्यतां नीतः ।
तानपि वहसि पटीरज ! किं कथयामस्त्वदीयमौन्नत्यम् ? ॥ १९ ॥

निरूपायायां वृत्तान्तस्योपस्थितेः समात् समप्रतीतिनिरूपाप्रस्तुतप्रशंसा । वसन्ततिलकं वृत्तं—"ज्ञेयं वसन्ततिलकं तभजा जगौ गः" इति लक्षणात्॥१६

मधुप इति ।—अम्बुजिनि ! हे पद्मिनि ! अस्मिन् मारुते वायौ, त्वत्परिमलग्राहिणीति भावः, मधुपे इव भृङ्गे इव, सौरभलोभं सुवासलुब्धतां, मा मंस्था न मन्यस्व, मधुपो यथा मधुलोभात् त्वदर्थी, तथा पवनः स्वलोभात् त्वत्सौरभार्थी नेति भावः ; अमुना मारुतेन, लोकानां प्राणिनां, मुदे एव आनन्दायैव, महितोऽपि पूजितोऽपि, सर्वजनादृतोऽपीति भावः ; आत्मा स्वस्वरूपम्, अर्थितां त्वत्प्रार्थितां, नीतः प्रापितः । अत्राप्रस्तुतेन मधुप-मारुतयोर्वृत्तान्तेन प्रस्तुतस्य स्वार्थभिद्-परार्थभिद्वोर्वृत्तान्तस्योपस्थितेः समात् समप्रतीतिरूपाप्रस्तुतप्रशंसा ॥ १७ ॥

गुञ्जतीति ।—हे मालति ! मिलिन्दे भृङ्गे, मञ्जु मधुरं, गुञ्जति रुवति सति, मौनं तूष्णीम्भावं, मुकुलीभावमिति यावत्, अविकासमिति भावः, मा उपयासीः नोपगच्छ, स्वविकासेन इमं प्रीणयेति भावः । नायं सामान्य इत्याह, शिरसेति ।—वदान्यानां दातॄणां, गुरवः श्रेष्ठाः, दानशौण्डा इत्यर्थः, सुरतरवः कल्पवृक्षाः पारिजातादयः, एनं मिलिन्दं, शिरसा मूर्ध्ना, सादरं वहन्ति धारयन्ति । अत्राप्रस्तुतेन मालती-सुरतरु-मिलिन्दानां वृत्तान्तेन साधारणस्य कस्यचिद्दातुः समीपे समागतस्य विशिष्टपात्रस्य महावदान्यसमीपे सम्मानकीर्त्तनस्य प्रस्तुतस्योपस्थितेः समात् समप्रतीतिरूपाप्रस्तुतप्रशंसा ॥ १८ ॥

यैरिति ।—पटीरज ! हे चन्दनतरो ! त्वं गुणगणवानपि बहुगुणाकरोऽपीत्यर्थः, यैः द्विजिह्वैः भुजङ्गैः, दुर्जनैरिति भावः, कर्तृभिः,

गाहितमखिलं गहनं परितो दृष्टाश्च विटपिनः सर्वे ।
सहकार ! न प्रपेदे मधुपेन भवत्समं जगति ॥ २० ॥

अपनीतपरिमलान्तरकथे पदं न्यस्य देवतरुकुसुमे ।
पुष्पान्तरेऽपि गन्तुं वाञ्छसि चेत् भ्रमर ! धन्योऽसि ॥२१॥

सतां साधूनाम्, असंस्तुताम् असेवनीयत्वम्, अग्राह्यत्वमित्यर्थः, नीतः प्रापितः, तानपि द्विजिह्वान्, वहसि, त्वदीयम् औन्नत्यम् औदार्य्यम्, आश्रितपालनव्रतेषु अटलत्वमिति भावः, किं कथयामः ? अवक्तव्यं तवाश्रितपालनव्रतं, येन साधुविनिन्दितोऽपि निन्दनीयान् तान् न जहासीति भावः । अत्राप्रस्तुतेन चन्दन-द्विजिह्ववृत्तान्तेन कस्यचित् प्रस्तुतस्य उदाराशयस्य दुर्जनानपि पालयतोऽङ्गीकृतपालनापरिहारस्योपस्थितेः समात् समप्रतीतिरूपाप्रस्तुतप्रशंसा ॥ १८ ॥

गाहितमिति ।— सहकार ! हे चूत ! मधुपेन भ्रमरेण, अखिलं समस्तं, गहनं काननं, गाहितम् अन्विष्टं, परितः सर्वतः, सर्वे विटपिनः तरव', 'दृष्टाश्च निरीक्षिताश्च, किन्तु जगति भवता समं तुल्यं, किमपि वस्त्विति शेषः, न प्रपेदे न प्राप्तम् । अत्राप्रस्तुतेन मधुप-चूतवृत्तान्तेन प्रस्तुतस्य कस्यचित् आश्रयाश्रितयोर्वृत्तान्तस्योपस्थितेः समात् समप्रतीतिरूपाप्रस्तुतप्रशंसा ॥ २० ॥

अपनीतेति ।—हे भ्रमर ! अपनीता निरस्ता, परिमलान्तराणां सौरभविशेषाणां, कथा येन तथाभूते, सर्वकुसुमादिसौरभवार्त्तापहारिणीत्यर्थः, देवतरुकुसुमे पारिजातादिपुष्पे, पदं न्यस्य निधाय, पुष्पान्तरेऽपि पार्थिवे इति भावः, गन्तुं वाञ्छसि अभिलषसि, चेत् यदि, तदा धन्योऽसि, अत्र विपरीतलक्षणया अधन्योऽसीत्यर्थः, तादृशरम्यवस्तुपरिहारेण निकृष्टवस्तुसमासक्तेरिति भावः ; यद्वा—सत्यमेव धन्योऽसि श्लाघनीयोऽसीत्यर्थः, उत्कर्ष-निकर्षबुद्धिपरिहारेण सर्वेषु वस्तुषु समरागादिति भावः । अत्राप्रस्तुतेन भ्रमरवृत्तान्तेन प्रस्तुतस्य कस्यचित् विमूढमतेर्वा महानुभावस्य वोपस्थितेः समात् समप्रतीतिरूपाप्रस्तुतप्रशंसा ॥ २१ ॥

तटिनि ! चिराय विचारय विन्ध्यभुवस्तव पवित्रायाः ।
शुष्यन्त्या अपि युक्तं किं खलु रथ्योदकादानम् ? ॥ २२ ॥
पत्रफलपुष्पलक्ष्म्या कदाऽप्यदृष्टं वृतञ्च खलु शूकैः ।
उपसर्पेम भवन्तं बर्बुर ! वद कस्य लोभेन ? ॥ २३ ॥
एकस्त्वं गहनेऽस्मिन् कोकिल ! न कलं कदाचिदपि कुर्य्याः ।
साजात्यशङ्कयाऽमी न त्वां निघ्नन्ति निर्दयाः काकाः ? ॥ २४ ॥

तटिनीति ।—तटिनि ! हे नदि ! चिराय विचारय, विन्ध्यात् पर्वतात् भूरुत्पत्तिर्यस्याः तथाभूतायाः, महाकुलप्रसूताया इति भावः, पवित्रायाः पावन्याः, तव शुष्यन्त्याः शोषं गच्छन्त्या अपि, रथ्यायाम् उदकस्य जलस्य, अदानम् अवितरणं. युक्तं किं खलु ? उचितमेव किम् ? नैवोचितमित्यर्थः, महान्तः कार्श्यमुपगता अपि कर्त्तव्यविमुखतां न भजन्ते इति भावः । अत्राप्रस्तुतेन तटिनीवृत्तान्तेन प्रस्तुतस्य कस्यचिन्महतो दीनभावमुपगतस्योपस्थितेः समात् समप्रतीतिरूपाप्रस्तुतप्रशंसा । उपगीति वृत्तम् ॥ २२ ॥

पत्रेति ।—हे बर्बुर ! "बाबला" इति ख्यातवृक्ष ! कदाऽपि पत्राणां फलानां पुष्पाणाञ्च लक्ष्म्या श्रिया, अदृष्टं कदाऽपि अदृष्टपत्रफलपुष्पलक्ष्मीकमित्यर्थः, प्रत्युत शूकैः कण्टकैः, वृतञ्च खलु आकीर्णञ्चैव, भवन्तं त्वां, कस्य लोभेन आशया, उपसर्पेम ? उपगच्छेम ? वद कथय, सर्व एव जनः किमपि फलमुद्दिश्य अन्यमाश्रयति, तव तु सविधे न कस्यापि प्रत्याशा, तत् कथं भवन्तमाश्रयामः ? इत्यर्थः । अत्राप्रस्तुतेन बर्बुरवृत्तान्तेन कस्यचित् कृपणस्योपस्थितेः समात् समप्रतीतिरूपाप्रस्तुतप्रशंसा । आर्य्या वृत्तम् ॥ २३ ॥

एक इति ।—हे कोकिल ! त्वम् एकः एकाकी, अस्मिन् गहने वने, कदाचिदपि कलं मधुरास्फुटं रवं, "ध्वनौ तु मधुरास्फुटे कलः" इत्यमरः ; न कुर्य्याः मा कुर्वित्यर्थः ; कुतः ? इत्याह, अमी निर्दयाः निष्ठुराः, काकाः साजात्यशङ्कया समाना जातिर्यस्य असौ सजातिः तस्य भावः साजात्यं तस्य शङ्कया अस्माकं सजातिरसौ कथमीदृशं रवं करोति ? तदनिष्टशंसी

तरुकुलसुषमापहरां जनयन्तीं जगति जीवजातार्तिम् ।
केन गुणेन भवानीतात ! हिमानीमिमां वहसि ? ॥ २५ ॥

कलभ ! तवान्तिकमागतमलिमेनं मा कदाऽप्यवज्ञासीः ।
अपि दानसुन्दराणां द्विपधुर्याणामयं शिरोधार्यः ॥ २६ ॥

अमरतरुकुसुमसौरभसेवनसम्पूर्णसकलकामस्य ।
पुष्पान्तरसेवेयं भ्रमरस्य विडम्बना महती ॥ २७ ॥

एष इति शङ्कया संशयेन, त्वां न निघ्नन्ति ? इति काकुः, अपि तु निघ्नन्त्येवेत्यर्थः, बहुषु एको भिन्नमतिर्हन्यते एवेति भावः। अत्राप्रस्तुतेन कोकिलवृत्तान्तेन प्रस्तुतस्य कस्यचित् साधोः दुर्जनग्रामपतितस्योपस्थितेः समात् समप्रतीतिरूपाप्रस्तुतप्रशंसा ॥ २४ ॥

तर्विति।—भवानीतात ! हे पार्वतीपितः ! हिमाद्रे ! एतेनास्य महिमाऽतिशयो व्यज्यते ; तरुकुलानां वृक्षनिवहानां, सुषमां परमां शोभां, "सुषमा परमा शोभा" इत्यमरः ; अपहरति नाशयतीति तादृशीं तरुकुलसुषमापहरां, जगति जीवजातानां प्राणिनङ्घानाम्, आर्तिं पीड़ां, जनयन्तीम् इमां हिमानीं हिमसंहतिं,"हिमानी हिमसंहतिः"इत्यमरः ; केन गुणेन वहसि ? धारयसि ? अत्राप्रस्तुतेन हिमालयवृत्तान्तेन कस्यचिन्महामहिमशालिनो निकृष्टाश्रयदानरूपस्याकार्यस्योपस्थितेः समात् समप्रतीतिरूपाप्रस्तुतप्रशंसा । आर्या वृत्तम् ॥ २५ ॥

कलभेति।—कलभ ! हे करिशावक ! तव अन्तिकं समीपम्, आगतम् उपस्थितम्, एनम् अलिं भृङ्गं, कदाऽपि मा अवज्ञासीः न अवमन्यस्व, अयम् अलिः, दानसुन्दराणां दानेन मदवारिणा, सुन्दराणां शोभमानानां, दानशौण्डानामिति भावः, द्विपधुर्याणां करीन्द्राणां, शिरोधार्यः मूर्द्धा ग्राह्यः, अतिमाननीय इति यावत् । अत्राप्रस्तुतेन अलि-कलभवृत्तान्तेन प्रस्तुतस्य कस्यचित् बालकसमीपेऽनादृतस्य वृद्धसम्मानितस्य साधोरुपस्थितेः समात् समप्रतीतिरूपाप्रस्तुतप्रशंसा । गीतिवृत्तम् ॥ २६ ॥

अमरेति।—अमरतरूणां पारिजातादीनां, कुसुमानि तेषां सौरभस्य सेवनेन भोगेन, सम्पूर्णाः सफलाः, सकलाः कामाः अभिलाषाः यस्य

पृष्टाः खलु परपुष्टाः परितो दृष्टाश्च विटपिनः सर्वे।
माकन्द! न प्रपेदे मधुपेन तवोपमा जगति ॥ २८ ॥
तोयैरल्पैरपि करुणया भीमभानौ निदाघे
मालाकार! व्यरचि भवता या तरोरस्य पुष्टिः।
सा किं शक्या? जनयितुमिह प्रावृषेण्येन वारां
धारासारानपि विकिरता विश्वतो वारिदेन ॥ २९ ॥

तादृशस्य भ्रमरस्य इयं पुष्पान्तरसेवा अपरपुष्पसम्भोगः, महती विडम्बना प्रवञ्चना, विधातृकर्तृकेति भावः। अत्राप्रस्तुतेन भ्रमरवृत्तान्तेन कस्यचित् परमसुखहेतुवस्तुत्यागेन सामान्यवस्तुसमाश्रयणस्योपस्थितेः समात् सम-प्रतीतिरूपाप्रस्तुतप्रशंसा। आर्य्या वृत्तम् ॥ २७ ॥

पृष्टा इति।—माकन्द! हे आम्र! मधुपेन भ्रमरेण, परपुष्टाः कोकिलाः, पृष्टाः खलु अनुयुक्ता एव, परितः समन्तात्, सर्वे विटपिनः वृक्षाः, दृष्टाश्च अवलोकिताश्च, किन्तु जगति तव उपमा सादृश्यं, न प्रपेदे न प्राप्ता। अत्राप्रस्तुतेन मधुप-माकन्दवृत्तान्तेन कस्यचित् प्रस्तुतस्य रम्य-वस्तुन उपस्थितेः समात् समप्रतीतिरूपाप्रस्तुतप्रशंसा। आर्य्या वृत्तम् ॥२८॥

तोयैरिति।—मालाकार! हे मालिन्! भीमः भीषणः, भानुः सूर्य्यो यस्मिन् तथाभूते, निदाघे ग्रीष्मे, भवता करुणया कृपया, अल्पैरपि तोयैः सलिलैः, अस्य तरोः या पुष्टिः तृप्तिः, व्यरचि कृता, इह अस्मिन् तरौ, प्रावृषि भवः प्रावृषेण्यः वार्षिक इत्यर्थः तेन, वारिदेन जलधरेण, विश्वतः समन्तात्, वारां जलानां, धारासारानपि धारासम्पातानपि, विकिरता वर्षता सता, सा पुष्टिः, शक्या किम्? साधनीया किम्? नैव शक्यत्यर्थः; असमये अल्पेनापि तृप्तिः साध्यते, समये तु प्रभूतेनापि नेति भावः। अत्राप्रस्तुतेन मेघ-मालाकारवृत्तान्तेन कस्यचित् प्रस्तुतस्य असमयोपकारि-समयोपकारिरूपस्योपस्थितेः समात् समप्रतीतिरूपाप्रस्तुतप्रशंसा। मन्दाक्रान्ता वृत्तं, "मन्दाक्रान्ताऽम्बुधिरसनगैर्मो भनौ तौ गयुग्मम्" इति लक्षणात् ॥ २९ ॥

आरामाधिपतिर्विवेकविकलो नूनं रसा नीरसा
वात्याभिः परुषीकृता दश दिशश्चण्डातपो दुःसहः।
एवं धन्वनि चम्पकस्य सकले संहारहेतावपि
त्वं सिञ्चन्नमृतेन तोयद ! कुतोऽप्याविष्कृतो वेधसा ॥ १० ॥

न यत्र स्थेमानं दधुरतिभयभ्रान्तनयना:
गलद्दानोद्रेकभ्रमदलिकदम्बाः करटिनः।
लुठन्मुक्ताभारे भवति परलोकं गतवतो
हरेरद्य द्वारे शिवशिव ! शिवानां कलकलः ॥ ११ ॥

आरामेति।—तोयद ! हे मेघ ! आरामस्य उपवनस्य, "आरामः स्यादुपवनम्" इत्यमरः ; अधिपतिः प्रभुः, विवेकविकलः कया प्रक्रियया आरामः पुष्टिं नीयते इति विचाररहित इत्यर्थः, नूनं निश्चितम् ; रसा पृथ्वी, "रसा विश्वम्भरा स्थिरा। गोत्रा कुः पृथिवी पृथ्वी" इत्यमरः ; नीरसा रसरहिता, दश दिशः वात्याभिः वायुविशेषैः, परुषीकृताः कठिनीकृताः, चण्डः तीक्ष्णः,आतपः सौरं तेजः, दुःसहः सोढुमशक्यः, एवम् इत्थं गते इत्यर्थः, धन्वनि मरुदेशे, संहारहेतौ अपि विनाशकारणेऽपि, उपस्थिते इति शेषः, वेधसा विधात्रा, चम्पकस्य सकले समूहे, अमृतेन जलेन, सिञ्चन् त्वं कुतोऽपि आविष्कृतः प्रकटीकृतः ; यद्वा—चम्पकस्य सकले सर्वप्रकारे इत्यर्थः, संहारहेतौ अपीति योजना। अत्राप्रस्तुतेन मरुदेशस्थितचम्पक-तोयदवृत्तान्तेन प्रस्तुतस्य कस्यचित् अतीवविपन्नस्य केनचिदनुकम्पितस्योपस्थितेः प्रतीतेः समप्रतीतिरूपाप्रस्तुतप्रशंसा। शार्दूलविक्रीडितं वृत्तम् ॥ १० ॥

नेति।—यत्र गलतः स्रवतः, दानस्य मदजलस्य, उद्रेकात् उदयात्, भ्रमन्तः अलिकदम्बाः भ्रमरसङ्घाः येषां तथोक्ताः, करटिनः गजेन्द्राः, अति-भयेन भ्रान्तानि घूर्णितानि, नयनानि येषां तथाभूताः सन्तः, स्थेमानं स्थितिं, न दधुः न स्थातुं शेकुरित्यर्थः, अद्य शिवशिव ! इति खेदे,परलोकं गतवतः मृतस्येत्यर्थः, हरेः सिंहस्य,"सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केशरी हरिः" इत्यमरः ; लुठन्तः मुक्तानां भाराः गजकुम्भविदारणच्युता इति भावः यस्मिन् तथाभूते, तत्र द्वारे "यच्छब्देन तु तच्छब्दो बोद्धव्यः सततं

दधानः प्रेमाणं तरुषु समभावेन विपुलं
न मालाकारोऽसावकृत करुणां बालवकुले।
अयन्तु द्रागुद्यत्कुसुमनिकराणां परिमलैः
दिगन्तानातेने मधुपकुलझङ्कारभरितान्॥ ३२॥

मूलं स्थूलमतीव बन्धनदृढं शाखाः शतं मांसलाः
वासो दुर्गमहीधरे तरुपते! कुत्रास्ति भीतिस्तव?।

बधे।" इति नयेन यच्छब्देन तच्छब्दोपस्थितेः; शिवानां शृगालानां, कलकलः भवति। अत्राप्रस्तुतेन मृतसिंहद्वारे शिवाकलकलेन प्रस्तुतस्य कस्यचिन्महामहिमशालिनो मरणे तद्गृहे क्षुद्राणामाधिपत्यस्योपस्थितेः समात् समप्रतीतिरूपाप्रस्तुतप्रशंसा। शिखरिणी वृत्तं, "रसैरुद्रैश्छिन्ना यमनसभला गः शिखरिणी" इति तल्लक्षणात्॥ ३१॥

दधान इति।—असौ मालाकारः उद्यानपालः, तरुषु, सर्वेष्विति शेषः, महत्सु इति भावः, समभावेन तुल्यरूपेण, विपुलं बहुलं, प्रेमाणं स्नेहं, दधानः धारयन् सन्, बालवकुले वकुलशिशौ, करुणां कृपां, न अकृत न अकरोत्, जलसेचनादिनेति भावः, यद्वा—सर्वेषु तरुषु समरागात् बालवकुले करुणां विशिष्टामिति भावः, न अकृत; तु किन्तु, अयं बालवकुलः, द्राक् झटिति, उद्यन्ति उद्गच्छन्ति, यानि कुसुमानि पुष्पाणि, तेषां निकराः समूहाः, तेषां परिमलैः सौरभैः, दिगन्तान् मधुपकुलानां भ्रमरसङ्घानां, झङ्कारैः भरितान् पूरितान्, आतेने अकरोत्। अत्राप्रस्तुतेन मालाकारबालवकुलवृत्तान्तेन प्रस्तुतस्य कस्यचित् प्रधानप्रतिपालकस्याप्रधानमुपेक्षमाणस्य तस्मादेवाप्रधानादुपकारप्राप्तिरूपस्योपस्थितेः समात् समप्रतीतिरूपाप्रस्तुतप्रशंसा। शिखरिणी वृत्तम्॥ ३२॥

मूलमिति।—तरुपते! हे वृक्षप्रवर! तव मूलम् अतीव स्थूलं मांसलमित्यर्थः, बन्धनेन दृढं कठिनं, दुरपनेयमिति भावः, शतं शाखाः मांसलाः वृहन्त इत्यर्थः, असंहार्य्या इति भावः, दुर्गमहीधरे दुर्गमगिरौ, वासः स्थितिः, न तत्र शत्रुप्रवेशसामर्थ्यमिति भावः, अतः तव कुत्र भीतिः

एकः किन्तु मनागयं जनयति स्वान्ते ममाधिज्वरं
ज्वालाऽऽलीवलयीभवन्नकरुणो दावानलो घस्मरः ॥ ३३ ॥
ग्रीष्मे भीष्मतरैः करैर्दिनकृता दग्धोऽपि यश्चातकः
त्वां ध्यायन् घन ! वासरान् कथमपि द्राघीयसो नीतवान् ।
दैवाल्लोचनगोचरेण भवता तस्मिन्निदानीं यदि
स्वीचक्रे करकानिपातनकृपा तत् कं प्रति ब्रूमहे ? ३४ ॥

भयम्, अस्ति ? न कुतोऽपीत्यर्थः ; किन्तु एकः केवलः, "एके मुख्यान्य-केवलाः" इत्यमरः ; अयं ज्वालाऽऽलीभिः शिखासमूहैः, "वह्नेर्द्वयोर्ज्वाल-कीलावर्चिर्हेतिः शिखा स्त्रियाम्" इत्यमरः ; वलयीभवन् मण्डलीभवन्, मण्डलाकारेण प्रसरन्नित्यर्थः, अकरुणः निर्दयः, घस्मरः भक्षणलोलुपः, वह्निर्वा, दावानलः वनवह्निः, मम स्वान्ते मनसि, "स्वान्तं हृन्मानसं मनः" इत्यमरः ; मनाक् अल्पम्, आधिज्वरं मनस्तापरूपां पीड़ां, जनयति उत्पादयति, यदि प्रबलो दावाग्निः प्रसरति, तदा मे का गतिरिति चिन्तयामीति भावः । अत्राप्रस्तुतेन वृक्ष-दावानलवृत्तान्तेन कस्यचित् सर्वथा सुखेन स्थितस्य प्रबलदस्युभयाशङ्कितबान्धवजनस्योक्तिरूपस्य प्रस्तुत-स्योपस्थितेः समात् समप्रतीतिरूपाप्रस्तुतप्रशंसा । शार्दूलविक्रीड़ितं वृत्तम् ॥ ३३ ॥

ग्रीष्मे इति ।—घन ! हे मेघ ! यश्चातकः ग्रीष्मे निदाघे, दिनकृता सूर्य्येण, भीष्मतरैः अतिभीषणैः, करैः किरणैः, दग्धोऽपि त्वां ध्यायन् त्वया करिष्यमाणां सन्तापनिवृत्तिं चिन्तयन् सन्नित्यर्थः, कथमपि अतिकष्टेण, द्राघीयसः अतिदीर्घान्, वासरान् दिवसान्, नीतवान् अतिवाहित-वान्, दैवात् भाग्यात्, "दैवं दिष्टं भागधेयं भाग्यम्" इत्यमरः ; लोचन-गोचरेण दृष्टिपथगतेन, भवता इदानीं तस्मिन् चातके, त्वत्कृपां प्रतीक्षमाणे इति भावः, यदि करकाणां वर्षोपलानां, "वर्षोपलस्तु करका" इत्यमरः ; निपातनमेव कृपा विपरीतलक्षणया अकृपेत्यर्थः, स्वीचक्रे गृहीता, तत् तदा, कं प्रति ब्रूमहे ? वदामः ? किमिति शेषः, न किमपि कं प्रति वदाम इत्यर्थः । अत्राप्रस्तुतेन घन-चातकवृत्तान्तेन कस्यचित्

दवदहनजटालज्वालजालाहतानां
परिगलितलतानां म्लायतां भूरुहाणाम् ।
अपि जलधर ! शैलश्रेणिशृङ्गेषु तोयं
वितरसि बहु कोऽयं श्रीमदस्तावकीनः ? ॥ २५ ॥

शृण्वन् पुरः परुषगर्जितमस्य हन्त !
रे पान्थ ! विह्वलमना न मनागपि स्याः ।
विश्वाभिरक्षणसमर्पितजीवितोऽयं
नाकर्णितः किमु सखे ! भवताऽम्बुवाहः ? ॥ २६ ॥

प्रस्तुतस्य कुत्रचिन्महाशये जने कृतनिर्भरस्य तदकृपामालोकयत उपस्थितेः समात् समप्रतीतिरूपाप्रस्तुतप्रशंसा । शार्दूलविक्रीडितं वृत्तम् ॥ २४ ॥

दवेति ।—जलधर ! हे मेघ ! दवदहनस्य दावानलस्य, जटालानां जटिलानां, ज्वालानां शिखानां, जालैः समूहैः, आहतानाम् आक्रान्तानां, ज्वलितानामिति यावत्, परिगलिताः परिच्युताः, अग्निसन्तापैरिति भावः, लताः प्रतत्यः येभ्यः तेषां लताऽऽवरणशून्यानामिति भावः, अत एव म्लायतां म्लानिं गच्छतां, शुष्यतामिति यावत्,भूरुहाणां वृक्षाणाम्, अनादरे षष्ठी, एतादृशान् विपन्नान् वृक्षाननादृत्येत्यर्थः, शैलश्रेणिशृङ्गेषु, अनाकाङ्क्षितेष्विति भावः, बहु अपि प्रचुरमपि, तोयं जलं, वितरसि वर्षसि, तावकीनः त्वदीय इत्यर्थः, अयं श्रीमदः सम्पद्विकारः, "मदो विकारः सौभाग्ययौवनाद्यवलेपजः" इति दर्पणः, कः ? अतीव निन्दनीय इति भावः । अत्र अप्रस्तुतेन मेघवृत्तान्तेन कस्यचित् धनिनः पात्रापात्रवैमुख्येन अपात्रेषु धनं वितरतः प्रस्तुतस्योपस्थितेः समात् समप्रतीतिरूपाप्रस्तुत-प्रशंसा । मालिनी वृत्तं—"ननमयययुतेयं मालिनी भोगिलोकैः" इति तल्लक्षणात् ॥ २५ ॥

शृण्वन्निति ।—रे पान्थ ! हे पथिक ! हन्त ! खेदे, पुरोऽग्रतः, अस्य अम्बुवाहस्य, परुषगर्जितं कठोरध्वनिं, शृण्वन् आकर्णयन्, मनागपि अल्पमपि, विह्वलमनाः व्याकुलहृदयः, न स्याः न भवेः ; कुतः ? हे सखे ! अयम् अम्बुवाहः जलदः,विश्वेषां जगताम्,आभिरक्षणेन सन्तापनिवारणेन,

सौरभ्यं भुवनत्रयेऽपि विदितं शैत्यं नु लोकोत्तरं
कीर्त्तिः किञ्च दिगङ्गनाङ्गणगता किन्त्वेतदेकं शृणु।
सर्वानेव गुणानियं निगिरति श्रीखण्ड! ते सुन्दरान्
उज्झन्ती खलु कोटरेषु गरलज्वालां द्विजिह्वाऽऽवली ॥१७॥
नापेक्षा न च दाक्षिण्यं न प्रीतिर्न च सङ्गतिः।
तथाऽपि हरते तापं लोकानामुन्नतो घनः ॥ १८ ॥

समर्चितं सम्पूजितं,लोकैरिति भावः, जीवितं जीवनधारणं यस्य तथाभूतः, भवता त्वया, न आकर्णितः किम्? न श्रुतः किम्? यदि च अयं गर्जनेन भीषयति, किन्तु लोकानां जीवनहेतुरयम् इति भावः। अत्राप्रस्तुतेन पान्थ-जलदवृत्तान्तेन कस्यचित् प्रस्तुतस्य पथिकस्य कस्यचिदापाततः कटुभाषिणः पश्चात् प्रभूतोपकारिणो धनिकस्य सकाशे किञ्चित् प्रार्थयमानस्य आपाततस्तत्कटुभाषितेन भीषितस्य प्रबोधोपस्थितेः समात् समप्रतीतिरूपाप्रस्तुतप्रशंसा। वसन्ततिलकं वृत्तं, "ज्ञेयं वसन्ततिलकं तभजा जगौ गः" इति लक्षणात् ॥ ३६ ॥

सौरभ्यमिति।—श्रीखण्ड! हे चन्दनतरो! तव सौरभ्यं सुवासः, यशश्च, भुवनत्रयेऽपि विदितं ज्ञातं,सर्वैरिति शेषः; नु भोः! शैत्यं शीतलत्वं, लोकोत्तरम् अलौकिकं, किञ्च कीर्त्तिः दिश एव अङ्गनाः स्त्रियः, तासाम् अङ्गणं गता प्राप्ता, दिगन्तगामिनीति यावत्; किन्तु एतत् एकं वचनं, दोषसूचकमिति भावः, शृणु आकर्णय, कोटरेषु तव गह्वरेषु, गरलज्वालां विषज्वालाम्, उज्झन्ती वमन्ती, इयं द्विजिह्वाऽऽवली भुजङ्गश्रेणी, ते सर्वानेव सुन्दरान् रमणीयान्, गुणान् प्रागुक्तान् सौरभ्यादीन्, निगिरति खलु आवृणोत्येव। अत्राप्रस्तुतेन चन्दन-द्विजिह्ववृत्तान्तेन प्रस्तुतस्य कस्यचित् गुणिनः खलाश्रयदानदूषितस्योपस्थितेः समात् समप्रतीतिरूपाप्रस्तुतप्रशंसा। शार्दूलविक्रीडितं वृत्तम् ॥ ३७ ॥

नेति।—अपेक्षा उपकारप्राप्त्यादीनां प्रत्याशा, न, अस्तीति सर्वत्र योज्यं, दाक्षिण्यम् आनुकूल्यं च, न, प्रीतिः प्रणयः, स्नेह इत्यर्थः, न, सङ्गतिः सहवासश्च, न, तथाऽपि घनः मेघः, उन्नतः अभ्युदयं गतः सन्, लोकानां तापं हरते नाशयति। अत्र तापहरणहेतूनामपेक्षादीनाम-

समुत्पत्तिः स्वच्छे सरसि हरिहस्ते निवसतिः
विलासः पद्मायाः सुरहृदयहारी परिमलः।
गुणैरेतैरन्यैरपि च ललितस्याम्बुज! तव
द्विजोत्तंसे हंसे यदि रतिरतीवोन्नतिरियम् ॥ ३९ ॥
साकं ग्रावगणैर्लुठन्ति मणयस्तीरेऽर्कबिम्बोपमाः
नीरे नीरचरैः समं स भगवान् निद्राति नारायणः।
एवं वीक्ष्य तवाविवेकमपि च प्रौढ़ं परामुन्नतेः
किं निन्दाम्यथवा स्तवानि कथय क्षीरार्णव! त्वामहम् ?॥४०॥

भावेऽपि तापहरणात् विभावनाऽलङ्कारः ; तदुक्तं दर्पणे, "विभावना विना हेतुं कार्य्योत्पत्तिर्यदुच्यते" इति ; अप्रस्तुतघनवृत्तान्तेन प्रस्तुतस्य कस्यचित् महानुभावस्य उपकारादिनिरपेक्षस्य लोकसन्तापहरणकारित्वस्योपस्थितेः समात् समप्रतीतिरूपाप्रस्तुतप्रशंसा च,तदनयोः संसृष्टिः। अनुष्टुप् वृत्तम्॥३८

समुत्पत्तिरिति।—अम्बुज! हे पद्म! तव स्वच्छे निर्मले, सरसि सरोवरे, समुत्पत्तिः जन्म,निष्कलङ्ककुलजातत्वमिति भावः,हरेर्नारायणस्य, हस्ते निवसतिः निवासः, हरेः शङ्खचक्रगदापद्मधारित्वादिति भावः, महान् आश्रय इति तात्पर्य्यम् ; यद्वा—हरेः सूर्य्यस्य, हस्ते करे, किरणे इत्यर्थः, निवसतिः विकास इति यावत्, पद्मायाः लक्ष्म्याः, विलासः विहारस्थानं, लक्ष्म्याः पद्मवननिवासादिति भावः, परिमलः सौरभं, सुराणां देवानां, हृदयं हरतीति तथोक्तः देवमनोहर इत्यर्थः, एतैरन्यैश्च सौन्दर्य्यादिभिः गुणैः, ललितस्य सुन्दरस्य "ललितं त्रिषु सुन्दरम्" इत्यमरः ; यद्वा—अलङ्कृतस्य, तव द्विजानां पक्षिणाम्, उत्तंसे भूषणविशेषे, श्रेष्ठे इत्यर्थः, अथ च ब्राह्मणश्रेष्ठे, हंसे रतिः अनुरागः, यदि, भवतीति शेषः, तदा इयं रतिः, अतीव उन्नतिः अभ्युदयः, ब्राह्मणा हि त्वया देवानर्चयन्तीति तव समुन्नतेः परा काष्ठा किं वक्तव्या ? इति भावः। अत्राप्रस्तुतेन अम्बुजवृत्तान्तेन प्रस्तुतस्य कस्यचित् सद्वंशजातस्य गुणिनः समुपयुक्तसाधुहस्ते पतितस्योपस्थितेः समात् समप्रतीतिरूपाप्रस्तुतप्रशंसा। शिखरिणी वृत्तम् ॥ ३९ ॥

साकमिति।—क्षीरार्णव! हे क्षीरनिधे! तव तीरे अर्कबिम्बोपमाः

किं खलु रत्नैरेतैः ? किं पुनरभ्रायितेन वपुषा ते ?।
सलिलमपि यत्र तावकमर्णव ! वदनं प्रयाति तृषितानाम् ॥४१॥

इयत्यां सम्पत्तावपि च सलिलानां त्वमधुना
न तृष्णामार्त्तानां हरसि यदि कासार ! सहसा ।
निदाघे चण्डांशौ किरति परितोऽङ्गारनिकरं
कृशीभूतः केषामहह !! परिहर्त्तासि खलु ताम् ॥ ४२ ॥

सूर्यमण्डलसन्निभाः, मणयः पद्मरागादीनि रत्नानि, ग्रावगणैः प्रस्तरसङ्घैः, साकं सह, लुठन्ति पतितास्तिष्ठन्ति, विस्फुरन्ति वा, नीरे जले, स प्रसिद्धः, भगवान् नारायणः नीरचरैः जलचरैः मीनादिभिः, समं सह, निद्राति, एवम् इत्थं, तव अविवेकं रत्नेषु ग्रावसु च तथा नारायणे नीरचरेषु च तुल्यवृत्तिचरूपं विवेकराहित्यम्, अपि च उन्नतेः अभ्युदयस्य, परां महतीं, प्रौढिं उत्कर्षञ्च, वीक्ष्य अवलोक्य, अहं त्वां निन्दामि किम् ? अविवेकोऽयमिति धिगिति भावः, अथवा स्तवानि ? प्रशंसानि ? महामहिमशाली अयमिति धिगिति भावः, कथय ? वद ?। अत्राप्रस्तुतेन क्षीरार्णववृत्तान्तेन प्रस्तुतस्य कस्यचित् समलोष्ट-काञ्चनस्य महापुरुषस्योपस्थितेः समात् समप्रतीतिरूपाप्रस्तुतप्रशंसा। शार्दूलविक्रीडितं वृत्तम् ॥ ४० ॥

किमिति।—अर्णव ! हे समुद्र ! ते तव, एतैः रत्नैः किं खलु ? नैव किमपि प्रयोजनमित्यर्थः, पुनः किञ्च, अभ्रायितेन अभ्रं मेघः, तद्वदाचरितेन, नीलेनेति भावः, वपुषा अवयवेन, किम् ? न किमपि प्रयोजनमित्यर्थः, यत् यस्मात्, तव इदं तावकं, सलिलमपि, रत्नं दूरे आस्तामिति भावः, तृषितानां पिपासूनां, वदनं न प्रयाति न आगच्छति। अत्राप्रस्तुतेन अर्णववृत्तान्तेन कस्यचित् कृपणस्य धनिनः श्यामकलेवरस्योपस्थितेः समात् समप्रतीतिरूपाप्रस्तुतप्रशंसा ॥ ४१ ॥

इयत्यामिति।—कासार ! हे सरोवर ! "कासारः सरसी सरः" इत्यमरः ; त्वम् अधुना साम्प्रतं, सलिलानां जलानाम्, इयत्याम् एतावत्यां, सम्पत्तावपि समृद्धौ सत्यामपि, यदि आर्त्तानां तृषापीड़ितानां, तृष्णां सहसा न हरसि न अपनयसि, तदा निदाघे ग्रीष्मे, चण्डांशौ सूर्य्ये, परितः

अयि ! रोषमुरीकरोषि नो चेत्
किमपि त्वां प्रति वारिधे ! वदामः ।
जलदेन तवार्थिना विमुक्ता-
न्यपि तोयानि मनाङ् न हा !! जहासि ॥ ४३ ॥

न वारयामो भवतीं विशन्तीं वर्षानदि ! स्रोतसि जह्नुजायाः ।
न युक्तमेतत्तु पुरो यदस्यास्तरङ्गभङ्गान् प्रकटीकरोषि ॥ ४४ ॥

समन्तात्, अङ्गारनिकरम् अङ्गारसङ्घं, किरति वर्षति सति, कृशीभूतः कृशतामापन्नः सन्, अहह !! खेदे, केषां जनानां, तां तृष्णां, परिहर्त्तासि खलु ? अपनेष्यसि किल ? नैव कस्यापि तृष्णामपहर्तुं प्रभवसि इत्यर्थः । अत्राप्रस्तुतेन कासारवृत्तान्तेन प्रस्तुतस्य कस्यचित् अभ्युदयमापन्नस्य कार्पण्येन व्ययमकुर्वतो दुःसमये स्वयं दुर्गतस्योपस्थितेः समात् समप्रतीति-रूपाप्रस्तुतप्रशंसा । शिखरिणी वृत्तम् ॥ ४२ ॥

अयीति ।—अयि वारिधे ! हे समुद्र ! चेत् यदि, रोषं कोपं, नो उरी-करोषि न अङ्गीकरोषि, न कुप्यसीत्यर्थः, तदा त्वां प्रति किमपि किञ्चित्, वदामः कथयामः ; तवार्थिना त्वत्तो जलप्रार्थिनेत्यर्थः, जलदेन मेघेन, विमुक्तानि परित्यक्तानि अपि, जलानि मनाक् अल्पमपि, न जहासि न त्यजसि, हा !! इति खेदे ; तव सकाशात् जलदेन कथमपि गृहीतानि जलानि तेनैव वृष्टानि त्वं पुनः गृह्णासीति भावः । अत्राप्रस्तुतेन वारिधिवृत्तान्तेन प्रस्तुतस्य कस्यचित् कृपणस्य केनाप्यर्थिना कथमपि गृहीतं धनस्य तेनैवार्थिभ्यो वितीर्णं धनं पुनरादानस्योपस्थितेः समात् समप्रतीतिरूपाप्रस्तुतप्रशंसा ॥ ४३ ॥

नेति ।—हे वर्षानदि ! भवतीं त्वां, जह्नुजायाः जाह्नव्याः, गङ्गाया इत्यर्थः, स्रोतसि प्रवाहे विशन्तीम् अन्तर्गच्छन्तीं, न वारयामः न निषेधामः, किन्तु अस्याः जह्नुजायाः, पुरः अग्रतः, यत् तरङ्गभङ्गान् ऊर्मि-रेखाः, प्रकटीकरोषि, एतत्तु न युक्तं न उचितम् । अत्राप्रस्तुतेन वर्षानदी-

पौलोमीपतिकानने विलसतां गीर्वाणभूमिरुहां
येन घ्रातसमुज्झितानि कुसुमान्याजघ्रिरे निर्जरैः ।
तस्मिन्नद्य मधुव्रते विधिवशान्माध्वीकमाकाङ्क्षति
त्वञ्चेदञ्चसि लोभमम्बुज ! तदा किं त्वां प्रति ब्रूमहे ? ॥ ४५ ॥

भुक्ता मृणालपटली भवता निपीता-
न्यम्बूनि यत्र नलिनानि निषेवितानि ।
रे राजहंस ! वद तस्य सरोवरस्य
कृत्येन केन भवितासि कृतोपकारः ? ॥ ४६ ॥

वृत्तान्तेन प्रस्तुतस्य कस्यचित् क्षुद्रस्य महोदयजनसङ्गिनस्तादृशोंस्व-सम्भाषणादिकं कुर्वतः समुपस्थितेः समात् समप्रतीतिरूपाप्रस्तुतप्रशंसा । उपजातिवृत्तम् ॥ ४४ ॥

पौलोमीति ।—अम्बुज ! हे पङ्कज ! पुलोम्नोऽपत्यं स्त्री पौलोमी शची, तस्याः पतिरिन्द्रः, तस्य कानने उद्याने, नन्दने इत्यर्थः, विलसतां विराजतां, गीर्वाणभूमिरुहां देवतरूणां, पारिजातादीनाम् इत्यर्थः, आदौ घ्रातानि पश्चात् समुज्झितानि सन्त्यक्तानि घ्रातसमुज्झितानि, कुसुमानि निर्जरैः देवैः सह, येन मधुव्रतेन, आजघ्रिरे आघ्रातानि, तस्मिन् मधुव्रते मधुपे, अद्य विधिवशात् माध्वीकं मधु, तवेति शेषः, आकाङ्क्षति अभिलषति सति, त्वं चेत् यदि, लोभं क्षोभं, सङ्कोचमित्यर्थः, दानवैमुख्यमिति यावत्, अञ्चसि गच्छसि, तदा त्वां प्रति किं ब्रूमहे ? किं कथयाम ? न किञ्चिदपि ब्रूमहे इत्यर्थः, एतादृशमपि पात्रं न गणयसीति चित्रं तव चरित्रमिति भावः । अत्राप्रस्तुतेनाम्बुज-मधुपवृत्तान्तेन प्रस्तुतस्य कस्यचित् कृपणस्य महामान्यसत्पात्रेऽपि धनं वितरितुमनिच्छत उपस्थितेः समात् समप्रतीतिरूपाप्रस्तुतप्रशंसा । शार्दूलविक्रीडितं वृत्तम् ॥ ४५ ॥

भुक्तेति ।—हे राजहंस ! भवता त्वया, यत्र मृणालपटली मृणालसमूहः, भुक्ता खादिता, अम्बूनि जलानि, निपीतानि सम्यक् पीतानि, तथा नलिनानि कमलानि, निषेवितानि सम्भुक्तानि, केन कृत्येन कार्य्येण, तस्य सरोवरस्य कृतोपकारः उपकारी, भवितासि, वद ? कथय ?

प्रारम्भे कुसुमाकरस्य परितो यस्योल्लसन्मञ्जरी-
पुञ्जे मञ्जुलगुञ्जितानि रचयंस्तानातनोरुत्सवान् ।
तस्मिन्नद्य रसालशाखिनि दशां दैवात् कृशामञ्चति
त्वञ्चेन्मुञ्चसि चञ्चरीक ! विनयं नीचस्त्वदन्योऽस्ति कः ? ॥ ४७ ॥

एणीगणेषु गुरुगर्वनिमीलिताक्षः
किं कृष्णसार ! खलु खेलसि काननेऽस्मिन् ? ।
सीमामिमां कलय भिन्नकरीन्द्रकुम्भ-
मुक्तामयीं हरिविहारवसुन्धरायाः ॥ ४८ ॥

अत्राप्रस्तुतेन राजहंसवृत्तान्तेन प्रस्तुतस्य कस्यचिदुपकृतस्य उपकर्त्तुः प्रत्युपकारपराङ्मुखस्योपस्थितेः समात् समप्रतीतिरूपाप्रस्तुतप्रशंसा । वसन्ततिलकं वृत्तम् ॥ ४६ ॥

प्रारम्भे इति ।—चञ्चरीक ! हे भ्रमर ! त्वं कुसुमाकरस्य वसन्तस्य, प्रारम्भे वसन्तस्य प्रादुर्भावे, यस्य रसालशाखिनः, परितः समन्तात्, उल्लसन्तीनाम् उद्गच्छन्तीनां, मञ्जरीणां पुञ्जे समूहे, मञ्जुलानि मनोज्ञानि, गुञ्जितानि रचयन् कुर्वन्, तान् उत्सवान् आनन्दान्, आतनोः कृतवानसि,अद्य तस्मिन् रसालशाखिनि चूतद्रुमे, दैवात् दुर्भाग्यात्, कृशां दीनां, दशाम् अञ्चति प्राप्नुवति सति, चेत् यदि, विनयं शिष्टाचारं, मुञ्चसि त्यजसि, तं परित्यजसीति भावः, तदा त्वदन्यः त्वत्तोऽपरः, नीचः क्षुद्रः, कः अस्ति ? न कोऽपि अस्तीत्यर्थः । अत्राप्रस्तुतेन भ्रमरस्य रसालत्याग-वृत्तान्तेन प्रस्तुतस्य कस्यचिदसमये उपकारिजनत्यागिन उपस्थितेः समात् समप्रतीतिरूपाप्रस्तुतप्रशंसा । शार्दूलविक्रीडितं वृत्तम् ॥ ४७ ॥

एणीति ।—हे कृष्णसार ! अस्मिन् कानने वने, गुरुणा महता, गर्वेण अहङ्कारेण, निमीलिते मुद्रिते,अक्षिणी येन तथाभूतः, गर्वान्धः सन्नित्यर्थः, एणीगणेषु हरिणीवृन्देषु, किं कथं, खेलसि खलु ? क्रीडसि एव ? इत्यर्थः ; इमां त्वदधिष्ठितामिति भावः, हरेः सिंहस्य, विहारवसुन्धरायाः विहारभूमेः, भिन्नानां विदारितानां, करीन्द्रकुम्भानां मुक्तामयीं मौक्तिक-पूर्णामित्यर्थः, सीमां पर्य्यन्तविभागं, कलय अवधारय, इदानीमेवस्मात्

जठरज्वलनज्वलताऽप्यपगतशङ्कं समागताऽपि पुरः।
करिणामरिणा हरिणा हरिणाली हन्यतां नु कथम्? ॥ ४९ ॥

येन भिन्नकरिकुम्भविस्खलन्-
मौक्तिकावलिभिरञ्चिता मही।
अद्य तेन हरिणान्तिके कथं
कथ्यतां नु हरिणा पराक्रमः? ॥ ५० ॥

स्थितिं नो रे! दध्याः क्षणमपि मदान्धेक्षण! सखे!
गजश्रेणीनाथ! त्वमिह जटिलायां वनभुवि।

स्थानात् पलायस्व, नो चेत् सिंहः समागत्य त्वां निहनिष्यतीति भावः। अत्राप्रस्तुतेन कृष्णसारवृत्तान्तेन प्रस्तुतस्य कस्यचित् परस्त्रीविहारिण उपस्थितेः समात् समप्रतीतिरूपाप्रस्तुतप्रशंसा। वसन्ततिलकं वृत्तम् ॥४८॥

जठरेति।—करिणां गजानाम्, अरिणा शत्रुणा, हरिणा सिंहेन, जठरज्वलनेन जाठरेणाग्निना, ज्वलताऽपि नितरां क्षुधितेनापीत्यर्थः, पुरोऽग्रतः, अपगता शङ्का यस्मिन् तत् यथा तथा समागताऽपि समुपस्थिताऽपि, हरिणाली मृगराजिः, कथं नु वितर्के, हन्यताम्? नैव हन्यतामित्यर्थः, महतामयोग्यवैरिता नाचितेति भावः। अत्राप्रस्तुतेन सिंहवृत्तान्तेन कस्यचित् प्रस्तुतस्य महतोऽयोग्यवैरितापराङ्मुखस्योपस्थितेः समात् समप्रतीतिरूपाप्रस्तुतप्रशंसा। आर्या वृत्तम् ॥ ४९ ॥

येनेति।—येन हरिणा सिंहेन, भिन्नेभ्यः विदारितेभ्यः, करिकुम्भेभ्यः विस्खलन्त्यः प्रभ्रश्यन्त्यः, या मौक्तिकावलयः मुक्तानिचयाः ताभिः, मही पृथिवी, अञ्चिता पूजिता, अलङ्कृता इत्यर्थः, अद्य तेन हरिणा, हरिणान्तिके मृगसमीपे, मृगान् प्रतीत्यर्थः, पराक्रमः बलप्रकटनं, कथं नु कथ्यताम्? नैव योग्यो हरिणेषु अस्य पराक्रम इति भावः। अत्राप्रस्तुतेन सिंहवृत्तान्तेन प्रस्तुतस्य कस्यचिन्महानुभावस्य क्षुद्रेषु प्रतापानाविष्करणस्योपस्थितेः समात् समप्रतीतिरूपाप्रस्तुतप्रशंसा। रथोद्धता वृत्तं, "रात्परैर्नरलगै रथोद्धता।" इति तल्लक्षणात् ॥ ५० ॥

स्थितिमिति।—मदेन गर्वेण, अन्धे ईक्षणे नयने यस्य तत्सम्बुद्धौ रे

असौ कुम्भिभ्रान्त्या खरनखरविद्रावितमहा-
गुरुग्रावग्रामः स्वपिति गिरिगर्भे हरिपतिः ॥ ५१ ॥

गिरिगह्वरेषु गुरुगर्वगुम्फितो
गजराजपोत ! न कदापि सञ्चरेः ।
यदि बुध्यते हरिशिशुः स्तनन्धयो
भविता करेणुपरिशेषिता मही ॥ ५२ ॥

निसर्गादारामे तरुकुलसमारोपसुकृती
कृती मालाकारो बकुलमपि कुत्रापि निदधे ।

मदान्धेक्षण ! गजश्रेणीनाथ ! गजयूथपते ! सखे ! त्वम् इह अस्यां, जटिलायां त्वरया पलायितुमशक्यायामिति भावः, वनभुवि काननप्रदेशे, क्षणमपि स्थितिम् अवस्थानं, नो दध्याः न कुरु, असौ हरिपतिः सिंहेन्द्रः, कुम्भिभ्रान्त्या कुम्भिनः गजा एते इति भ्रमेण, खरैः तीक्ष्णैः, नखरैः विद्राविता विदारिताः, महान्तः गुरवः दृढाः, ग्रावग्रामाः शिलाखण्डाः येन तथाभूतः सन्, श्रान्तः सन्निति भावः, गिरिगर्भे गिरिगह्वरे, स्वपिति निद्राति, असौ गतनिद्रस्त्वां दृष्ट्वैव निहनिष्यति, तत् शीघ्रं पलायस्वेति भावः। अत्राप्रस्तुतेन सिंहगजवृत्तान्तेन प्रस्तुतस्य कस्यचित् महाप्रतापशालिनः सकाशे अज्ञानात् समुपस्थितस्य तद्वैरिणः उपस्थितेः समात् समप्रतीतिरूपाप्रस्तुतप्रशंसा। शिखरिणी वृत्तम् ॥ ५१ ॥

गिरीति।—गजराजपोत ! हे गजेन्द्रशावक ! गुरुणा गर्वेण गुम्फितः युक्तः, अतिगर्वपरः सन् इत्यर्थः गिरिगह्वरेषु पर्वतगुहासु, कदाऽपि न सञ्चरेः न विचरेः, यदि स्तनन्धयः स्तन्यपायी, हरिशिशुः सिंहशावकः, बुध्यते जागर्त्ति, तदा मही पृथिवी, करेणुभिः परिशेषिता हस्तिनीमात्रशिष्टा, भविता भविष्यति, सर्वान् करिणः करिशावकांश्चासौ निहनिष्यति, स्त्रीणामवध्यत्वात् करिण्य एवावस्थास्यन्ते इति भावः। अत्राप्रस्तुतेन सिंहशिशु-करिशिशुवृत्तान्तेन प्रबलवैरिशावकयोरुपस्थितेः समात् समप्रतीतिरूपाप्रस्तुतप्रशंसा। मञ्जुभाषिणीवृत्तं, "सजसा जगौ च यदि मञ्जुभाषिणी" इति तल्लक्षणात् ॥ ५२ ॥

निसर्गादिति।—निसर्गात् स्वभावात्, तरुकुलानां वृक्षनिचयानां,

इदं को जानीते यदयमिह कोणान्तरगतो
जगज्जालं कर्त्ता कुसुमभरसौरभ्यभरितम् ? ॥ ५३ ॥
यस्मिन् वेल्लति सर्वतः परिचलत्कल्लोलकोलाहलै-
र्मन्थाद्रिभ्रमणभ्रमं हृदि हरिद्दन्तावलाः पेदिरे ।
सोऽयं तुङ्गतिमिङ्गिलाङ्गकवलीकारक्रियाकोविदः
क्रोडे क्रीडतु कस्य केलिकलहत्यक्तार्णवो राघवः ? ॥५४॥

समारोपे संरोपणे, सुष्ठु कृतम् अनुष्ठानम् अस्य अस्तीति तादृशः सुकृती, कृती कार्य्यदक्षः, मालाकारः माली, आरामे उपवने, "आरामः स्यादुपवनम्" इत्यमरः ; कुत्रापि आरामैकदेशे इत्यर्थः, वकुलमपि निदधे रोपितवान्, अयं वकुलः, इह आरामे, कोणान्तरगतः कोणविशेषस्थितः सन्, जगज्जालं भुवनसमूहं, कुसुमभराणां पुष्पनिचयानां, सौरभ्येण सौरभेण, भरितं पूरितं, यत् कर्त्ता करिष्यति, इदं को जनः, जानीते ? वेत्ति ? न कोऽपीत्यर्थः । अत्राप्रस्तुतेन वकुलवृत्तान्तेन सामान्य-पोषितानां मध्ये कस्यापि विशेषगुणवत्त्वेन प्रकाशितस्य कस्यचिदुपस्थितेः समात् समप्रतीतिरूपाप्रस्तुतप्रशंसा । शिखरिणी वृत्तम् ॥ ५३ ॥

यस्मिन्निति ।—यस्मिन् राघवे, वेल्लति चलति सति, हरिद्दन्तावलाः दिग्गजाः, सर्वतः समन्तात्, परिचलतां प्रसरतां, कल्लोलानां तरङ्गाणां, कोलाहलैः कलकलैः, "कोलाहलः कलकलः" इत्यमरः ; हृदि मनसि, मन्थाद्रेः समुद्रमन्थनगिरेः, मन्दरपर्वतस्येत्यर्थः, भ्रमणं विलोडनं, तस्य भ्रमः किमयं मन्दरो गिरिः सागरं विलोडयतीति सन्देहजनितभ्रान्तिं, पेदिरे प्रापुः, सोऽयं तुङ्गानां उच्चानां, तिमिङ्गिलाङ्गानां तिमिङ्गिलान् मत्स्यभेदान्, गच्छति गच्छति, ग्रासार्थमिति भावः तेषां तिमिङ्गिल-गिलाख्यमत्स्यभेदानां, कवलीकारक्रियायां ग्रासकरणे, कोविदः पण्डितः, दक्ष इत्यर्थः, राघवः "राघव बोयाली" इति प्रसिद्धः सामुद्रः मत्स्यविशेषः, केलिना यः कलहः विरोधः, सागरेण सह इति भावः, तेन त्यक्तः अर्णवः समुद्रः येन तथाभूतः, कालवशात् केनचित् कारणेन सागरसह विरोधे सागरं त्यजन् सन्नित्यर्थः ; यद्वा— कालेन अन्तकेन सह, कलहे विरोधे, मरणान्ते इति भावः, त्यक्तार्णवः

लूनं मत्तमतङ्गजैः कियदपि छिन्नं तुषारार्दितैः
शिष्टं ग्रीष्मजभीष्मभानुकिरणैर्भस्मीकृतं काननम् ।
एषा कोणगता मुहुः परिमलैरामोदयन्ती दिशः
हा ! कष्टं ! ललिता लवङ्गलतिका दावाग्निना दह्यते ॥५५॥

स्वर्लोकस्य शिखामणिः सुरतरुग्रामस्य धामाद्भुतं
पौलोमीपुरुहूतयोः परिणतिः पुण्यावलीनामसि ।
सत्यं नन्दन ! किन्त्विदं सहृदयैर्नित्यं विधिः प्रार्थ्यते
त्वत्तः खाण्डवरङ्गताण्डवनटो दूरेऽस्तु वैश्वानरः ॥ ५६ ॥

सन्, कस्य क्रोड़े क्रीड़तु ? न एतादृक् कस्यापि क्रोड़ोऽस्ति, यत्र असौ परिमातीति भावः। "अस्ति मत्स्यः तिमिर्नाम शतयोजनमायतः। तिमिङ्गिलगिलोऽप्यस्ति तद्गिलोऽप्यस्ति राघवः ॥" इति राघवस्य सर्वमत्स्याधिकत्वमुक्तम् । अत्राप्रस्तुतेन राघववृत्तान्तेन कस्यचित् प्रस्तुतस्य अतिमहोदयजनपालितस्य तद्विरोधि स्वयं तथा महाबलस्य निराश्रयस्योपस्थितेः समात् समप्रतीतिरूपाप्रस्तुतप्रशंसा। शार्दूल-विक्रीड़ितं वृत्तम् ॥ ५४ ॥

लूनमिति।—काननं वनं, मत्तैर्मतङ्गजैः हस्तिभिः, लूनं दलितं, कियदपि तुषारार्दितैः शिशिरोपद्रवैः, भावे क्त-प्रत्ययः ; छिन्नं क्षयं नीतं, शिष्टम् अवशिष्टं, ग्रीष्मजैः निदाघभवैः, भीष्मभानुकिरणैः भीषणसूर्य-मयूखैः, भस्मीकृतं दग्धम् ; हा ! कष्टम् ! एषा कोणगता काननकदेश-वर्त्तिनी, मुहुः पुनः पुनः, परिमलैः सौरभैः, दिशः आमोदयन्ती आह्लादयन्ती, ललिता सुन्दरी, मनोहारिणीत्यर्थः, "ललितं त्रिषु सुन्दरम्" इत्यमरः ; लवङ्गलतिका लवङ्गवल्ली, दावाग्निना वनानलेन, दह्यते भस्मीक्रियते। अत्राप्रस्तुतेन लवङ्गलतिकावृत्तान्तेन प्रस्तुतस्य कस्यचित् अबलाविनाशस्योपस्थितेः समात् समप्रतीतिरूपाप्रस्तुतप्रशंसा। शार्दूल-विक्रीड़ितं वृत्तम् ॥ ५५ ॥

स्वर्लोकस्येति।—नन्दन ! हे देवोद्यान ! त्वं स्वर्लोकस्य स्वर्गस्य, शिखा-मणिः शिरोरत्नं, तद्वत् शोभाकरमित्यर्थः, सुरतरूणां ग्रामस्य पारि-

स्वस्वव्यापृतिमग्नमानसतया मत्तो निवृत्ते जने
चञ्चूकोटिविपाटिताररपुटो यास्याम्यहं पञ्जरात् ।
एवं कीरवरे मनोरथमयं पीयूषमास्वादय-
त्यन्तः सम्प्रविवेश वारणकराकारः फणिग्रामणीः ॥ ५७ ॥

जातादिसमृद्धस्य, अद्भुतं विचित्रं, धाम आश्रयः, तथा पौलोमी पुरुहूतयोः शचीन्द्रयोः, पुण्यावलीनां सुकृतराशीनां, परिणतिः परिपाकः, फलमिति यावत्, असि भवसि, सत्य किन्तु सहृदयैः सचेताभिः, सदाशयैरित्यर्थः, जनैरिति शेषः, त्वदुपकारनिस्पृहैरपीति भावः, नित्यं सततं, विधिः विधाता, खाण्डवः तदाख्यवनविशेषः, रङ्गः नर्त्तनस्थानमिव, तत्र ताण्डवे नर्त्तने, "ताण्डवं नटनं नाट्यं लास्यं नृत्यञ्च नर्त्तने" इत्यमरः; नट इव खाण्डवदहनकारीत्यर्थः, वैश्वानरः अग्निः, "अग्निर्वैश्वानरो वह्निः" इत्यमरः; त्वत्तः त्वत्सकाशात्, दूरे अस्तु भवतु, त्वामग्निर्न दहतु इति भावः, इद प्रार्थ्यते याच्यते; सहृदया उपकारनिरपेक्षा एव सतां शुभमभिलषन्तीति भावः। अत्राप्रस्तुतेन नन्दनवृत्तान्तेन प्रस्तुतस्य कस्यापि साधोः सहृदयैरशुभनिवृत्तिशंसनस्योपस्थितेः समात् समप्रतीतिरूपाप्रस्तुतप्रशंसा। शार्दूलविक्रीडितं वृत्तम् ॥ ५६ ॥

स्वस्वेति।—स्वस्वव्यापृतिः निजनिजव्यापारः, तत्र मग्नं समासक्तं, मानसं यस्य तस्य भावः तत्ता तया हेतुना, जने मत्सन्निहितनरे इति भावः, मत्तः मत्सकाशात्, निवृत्ते अतिक्रान्ते सति, अहं चञ्चूकोट्या चञ्च्वग्रभागेन, विपाटितं विदलितम्, अररं कपाटं, पञ्जरद्वारमित्यर्थः, तदेव पुटमिव आवारकत्वादिति भावः येन तथाभूतः, विपाटितपञ्जरद्वारः सन्नित्यर्थः, पञ्जरात् यास्यामि पलायिष्ये, कीरवरे शुकपक्षिश्रेष्ठे, एवम् इत्थं, मनोरथमयं सङ्कल्पात्मकं, पीयूषम् अमृतम्, आस्वादयति सति, वारणकरः हस्तिशुण्डः, तद्वदाकारो यस्य तथाभूतः, अतिदीर्घः स्थूलश्च इति भावः, फणिग्रामणीः भुजङ्गप्रवरः, अन्तः मध्ये, पञ्जरस्य इति शेषः, सम्प्रविवेश सम्प्रविष्टवानित्यर्थः; कालसर्पेण असौ हतो नाशितश्चेति भावः। अत्राप्रस्तुतेन कीरवृत्तान्तेन कस्यचित् प्रस्तुतस्य मनसा भाविसुखं पर्य्या-

रे चापल्यजुषः! मृगाः! श्रितनगाः! कल्लोलमालाकुला-
मेतामम्बुधिगामिनीं व्यवसिताः सङ्गाहितुं वा कथम्?।
अत्रैवोच्छलदम्बुनिर्भरमहावर्त्तैः समावर्त्तितो
यत् ग्रावेव रसातलं पुनरसौ यातो गजग्रामणीः॥ ५८॥

पिब स्तन्यं पोत! त्वमिह मददन्तावलधिया
दृगन्तानाधत्से किमिति हरिदन्तेषु परुषान्?।
त्रयाणां लोकानामपि हृदयतापं परिहरन्
अयं धीरं धीरं ध्वनति नवनीलो जलधरः॥ ५९॥

लोचयतः सहसा कालेन कवलितस्योपस्थितेः समात् समप्रतीतिरूपा-प्रस्तुतप्रशंसा। शार्दूलविक्रीडितं वृत्तम्॥ ५७॥

रे इति।—रे श्रिता नगा यैः तथाभूताः पर्वतवासिन इत्यर्थः, चापल्यजुषः! चपलाः! मृगाः! यूयं कल्लोलमालाभिः तरङ्गश्रेणिभिः, आकुला आकीर्णा ताम् एतां पुरोवर्त्तिनीम्, अम्बुधिगामिनीं सागरगां, नदीमित्यर्थः, सङ्गाहितुम् अवगाहितुं, कथं वा केन हेतुना वा, व्यवसिताः? उद्युक्ताः? नैतत् युक्तमिदानीं युष्माकमिति भावः; यत् यस्मात्, असौ पुनरसावपि, गजग्रामणीः गजयूथपतिः, अत्रैव नद्याम्, उच्छलन्तः उद्रिक्ततां गच्छन्तः, अम्बूनां जलानां, निर्भराः निचया येषु तथाभूताः, ये महान्तः आवर्त्ताः जलभ्रमयः, "स्यादावर्त्तोऽम्भसां भ्रमः" इत्यमरः; तैः समावर्त्तितः विघूर्णितः सन्, ग्रावेव शिलेव, रसातलं पातालं, यातः गतः, मृत इति यावत्; का कथा अन्येषामिति भावः। अत्राप्रस्तुतेन नदी-मृग-गजेन्द्रवृत्तान्तेन प्रस्तुतस्य कस्यचिदतिमहताऽपि सम्प्रवेष्टुमशक्यं स्थानं प्रवेष्टुमिच्छतः क्षुद्रस्योपस्थितेः समात् समप्रतीतिरूपाप्रस्तुतप्रशंसा। शार्दूलविक्रीडितं वृत्तम्॥ ५८॥

पिबेति।—पोत! हे शिशो! त्वं स्तन्यं स्तनदुग्धं, पिब, इह एषु, हरिदन्तेषु दिगन्तेषु, मददन्तावलधिया मत्तगजेन्द्रोऽयमिति बुद्ध्या, परुषान् कलुषितान्, दृगन्तान् अपाङ्गान्, किमिति कथम् आधत्से? निदधासि? अयं नवनीलः जलधरः मेघः, त्रयाणामपि लोकानां जगतां, हृदयतापम् आधिं, परिहरन् अपनयन्, धीरं धीरम् अतिगम्भीरं यथा तथा, ध्वनति

घोरध्वनिभिरलं ते नीरद ! मे मासिको गर्भः ।
उन्मदवारणबुद्ध्या मध्येजठरं समुच्छलति ॥ ६० ॥
वैतुण्डगण्डकण्डूति-पाण्डित्यपरिपन्थिना ।
हरिणा हरिणालीषु कथ्यतां कः पराक्रमः ? ॥ ६१ ॥
नीरान्निर्मलतो जनिर्मधुरता वामामुखस्पर्धिनी
वासो यस्य हरेः करे परिमलो गीर्वाणचेतोहरः ।
सर्वस्वं तदहो ! महाकविगिरां कामस्य चाम्भोरुह !
त्वञ्चेत् प्रीतिमुरीकरोषि मधुपे तत्त्वां किमाःचक्ष्महे ? ॥ ६२ ॥

नर्दति । अत्राप्रस्तुतेन पात-जलधरवृत्तान्तेन कस्यचित् प्रस्तुतस्य भीषण-मूर्त्तेरथ च परमच्छितकरस्य दर्शनेन शङ्कितस्योपस्थितेः समात् समप्रतीति-रूपाप्रस्तुतप्रशंसा । शिखरिणी वृत्तम् ॥ ५८ ॥

घोरेति ।—नीरद ! हे जलद ! मे मम, मासिको मासैकभवः, गर्भः कुक्षिस्थजीवः, ते तव, घोरध्वनिभिः गम्भीरनादैः, उन्मदवारणबुद्ध्या मत्तगजोऽयं नदतीति धिया, जठरस्य मध्ये मध्येजठरम् उदरमध्ये, अल-मतिशयेन, समुच्छलति पतनाय चलतीत्यर्थः । अत्राप्रस्तुतेन गर्भपात-वृत्तान्तेन कस्यचित् प्रस्तुतस्थितेः समात् समप्रतीतिरूपाप्रस्तुतप्रशंसा । उपगीतिवृत्तम् ॥ ६० ॥

वैतुण्डेति ।—विशिष्टं तुण्डमाननं येषां ते वितुण्डाः ते एव वैतुण्डाः गजाः, स्वार्थेऽन्-प्रत्ययः ; तेषां गण्डयोः कपोलयोः, कण्डूतिः कण्डूयनं, घर्षणमित्यर्थः, तत्र यत् पाण्डित्यं नैपुण्यं, तत्परिपन्थिना तद्विरोधिना, गजवैरिणेत्यर्थः, हरिणा सिंहेन, हरिणालीषु मृगसंहतिषु, पराक्रमः बलप्रकाशः, कः कथ्यताम् ? नैव तत्पराक्रमो युक्त इति भावः । अत्राप्रस्तुतेन सिंह-मृगवृत्तान्तेन प्रस्तुतस्य कस्यचित् महापुरुषेण क्षुद्रजन-विरोधस्यायुक्ततोपस्थितेः समात् समप्रतीतिरूपाप्रस्तुतप्रशंसा । अनुष्टुप् वृत्तम् ॥ ६१ ॥

नीरादिति ।—अम्भोरुह ! हे पद्म ! यस्य तव निर्मलतः विमलात्, नीरात् जलात्, जनिरुत्पत्तिः, "जनिरुत्पत्तिरुद्भवः" इत्यमरः ; निर्दोषकुल-जातत्वमिति भावः ; मधुरता मनोहारित्वं, वामा सुन्दरी नारी, तस्या

लीलामुकुलितनयनं किं सुखशयनं समातनुषे?।
परिणामविषमहरिणा करिनायक! वर्द्धते वैरम्॥ ६३॥
विदुषां वदनाद्वाचः सहसा यान्ति नो बहिः।
याताश्चेन्न पराञ्चन्ति द्विरदानां रदा इव॥ ६४॥

मुखं स्पर्द्धते इति तत्स्पर्द्धिनी तदनुरूपेत्यर्थः, सुन्दरीमुखवत् मनो हरतीति भावः, हरेर्नारायणस्य सूर्य्यस्य वा, करे हस्ते, वासः स्थितिः, हरेः शङ्ख-चक्र गदा-पद्मधारित्वादिति भावः, साधुसङ्गतवास्तीति तात्पर्य्यं, परिमलः सौरभं सुगन्धश्च, गीर्वाणानां देवानां, चेतोहरः मनोहरः, देवगणेष्वपि तव सुख्यातिरस्तीति भावः, त्वं महाकवीनां गिरः वाचः, रचना इत्यर्थः तासां, कामस्य मदनस्य च, सर्वस्वं समस्तधनस्वरूपं, महाकवयस्त्वया स्वकृतिमुल्लासयन्ति, कामश्च स्वव्यापारमुद्दीपयतीति भावः, अहो! आश्चर्य्यं, तत् तथात्वेऽपि, त्वं चेत् यदि, मधुपं भ्रमरं, नीचं इति भावः, प्रीतिम् उरीकरोषि अङ्गीकरोषि, तत् तदा, त्वां किम् आचक्ष्महे? वदामः? न किमपीत्यर्थः, एतादृशस्य तव नीचासङ्गो नोचित इति भावः। अत्राप्रस्तुतेनाम्भोरुहस्य मधुपसङ्गवृत्तान्तेन प्रस्तुतस्य कस्यापि साधारसाधुसङ्गस्योपस्थितेः समात् समप्रतीतिरूपाप्रस्तुतप्रशंसा। शार्दूलविक्रीड़ितं वृत्तम्॥ ६२॥

लीलेति।—करिनायक! हे गजराज! लीलया विलासेन, मुकुलिते निमीलिते, नयने यस्मिन् तत् यथा तथा, किं कथं, सुखशयनं सुखसुप्तिं, समातनुषे? करोषि? न युक्तं तव सुखशयनमित्यर्थः; कुतः? इत्याह, परिणामे विषमः दारुणः, यः हरिः सिंहः, तेन वैरं शात्रवं, वर्द्धते वृद्धिं गच्छति। अत्राप्रस्तुतेन करि-सिंहवृत्तान्तेन कस्यचित् प्रस्तुतस्य दुरन्त-शत्रुजनविरुद्धस्य प्रमादतोऽवस्थितस्योपस्थितेः समात् समप्रतीतिरूपा-प्रस्तुतप्रशंसा। उपगीतिवृत्तम्॥ ६३॥

विदुषामिति।—विदुषां विद्यावतां, वदनात् मुखात्, वाचः वचनानि, सहसा पौर्वापर्य्यमनवधार्य्येति भावः, बहिः नो यान्ति न निःसरन्तीत्यर्थः, याताश्चेत् निःसृता यदि, तदा द्विरदानां हस्तिनां, रदा इव दन्ता इव, न

औदार्य्यं भुवनत्रयेऽपि विदितं सम्भूतिरम्भोनिधे-
र्वासो नन्दनकानने परिमलो गीर्वाणचेतोहरः ।
एवं दातृगुरोर्गुणाः सुरतरोः सर्वेऽपि लोकोत्तराः
स्यादर्थिप्रवरार्थितार्पणविधावेको विवेको यदि ॥ ६५ ॥
एको विश्वसतां हराम्यपघृणः प्राणानहं प्राणिनाम्
इत्येवं परिचिन्त्य मा स्वमनसि व्याधानुतापं कृथाः ।
भूपानां भवनेषु किञ्च विमलक्षेत्रेषु गूढाशयाः
साधूनामरयो वसन्ति कति नो त्वत्तुल्यकक्षाः खलाः ? ॥ ६६ ॥

---

परावर्त्तन्ते न निवर्तन्ते, यथा हस्तिदन्ता न कदाऽपि स्खलन्ति तथा सज्जनवाक्यानि न कदाऽपि विपर्य्ययं गच्छन्तीति निष्कर्षः । उपमाऽलङ्कारः ॥ ६४ ॥

औदार्य्यमिति ।—औदार्य्यं महत्त्वं, वदान्यत्वञ्च, "उदारो दातृ-महतोः" इत्यमरः ; भुवनत्रयेऽपि त्रिलोक्यामपि, विदितं ज्ञातं, दर्शनात् श्रवणाद्वा इति शेषः, अम्भोनिधेः समुद्रात्, मथ्यमानादिति भावः, सम्भूतिः समुत्पत्तिः, नन्दनकानने देवोद्याने, वासः स्थितिः, परिमलः सौरभं, सुयशश्च, गीर्वाणानां देवानां, "बर्हिर्मुखाः क्रतुभुजो गीर्वाणा दानवारयः" इति देवपर्य्यायेषु अमरः ; चेतोहरः मनोहरः, एवम् इत्थं, दातृगुरोः वदान्यप्रवरस्य, सुरतरोः कल्पद्रुमस्य, सर्वेऽपि गुणाः औदार्य्य-सत्कुलप्रसूति-सदाश्रय-माधुर्य्यादयः, लोकोत्तराः अलौकिकाः, असाधारणा इत्यर्थः, किन्तु अर्थिप्रवरैः याचकश्रेष्ठैः, अर्थितस्य याचितस्य, अर्पणविधौ प्रदानव्यापारे, एकः एकमात्रः, विवेकः विचारः, यदि स्यात् । अत्राप्रस्तुतेन सुरतरोरविवेकवृत्तान्तेन प्रस्तुतस्य कस्यचित् दातुः पात्रापात्राविवेकोपस्थितेः समात् समप्रतीतिरूपाप्रस्तुतप्रशंसा । शार्दूलविक्रीड़ितं वृत्तम् ॥ ६५ ॥

एक इति ।—हे व्याध ! अहमेकः केवलः, अपघृणः निर्दयः सन्, विश्वसतां नायमस्मान् हनिष्यतीति विश्वासेन चरतामित्यर्थः, प्राणिनां जीवानां, प्राणान् हरामि नाशयामि, इति एवं, परिचिन्त्य पर्य्यालोच्य, स्वमनसि निजचेतसि, अनुतापं पश्चात्तापं, मा कृथाः न कुरु, कुतः ?

विश्वास्य मधुरवचनैः साधून् ये वञ्चयन्ति नम्रतमाः।
तानपि दधासि मातः! काश्यपि! यातस्तवापि च विवेकः? ॥ ६७॥

अन्या जगद्धितमयी मनसः प्रवृत्ति-
रन्यैव काऽपि रचना वचनावलीनाम्।
लोकोत्तरा च कृतिराकृतिरार्त्तहृद्या
विद्यावतां सकलमेव गिरां दवीयः ॥ ६८ ॥

इत्याह, भूपानां राज्ञां, भवनेषु गृहेषु, किञ्च विमलचैलेषु तीर्थेषु इत्यर्थः, गूढ़ाशयाः अविज्ञाताभिप्रायाः, दुष्टमनसः इति भावः, साधूनाम् अरयः शत्रवः, चत्तृष्ककल्पाः त्वत्प्रतिरूपाः, खला दुर्जनाः, कति वसन्ति? बहवो वसन्तीत्यर्थः। अत्र व्याधस्य प्राणिहिंसायामुत्कर्षमुक्त्वा त्वत्तुल्यकल्पाः खला इत्युपमानत्वकल्पनात् प्रतीपालङ्कारभेदः। तथा च दर्पणः, "उक्त्वा चात्यन्तमुत्कर्षमत्युत्कृष्टस्य वस्तुनः। कल्पितेऽप्युपमानत्वे प्रतीपं केचिदूचिरे॥" इति। शार्दूलविक्रीड़ितं वृत्तम् ॥ ६६ ॥

विश्वास्येति।—मातः काश्यपि! हे वसुन्धरे! ये जनाः, नम्रतमाः अतिशयेन विनीताः सन्तः, मधुरवचनैः साधून् विश्वास्य वञ्चयन्ति प्रतारयन्ति, तानपि दधासि? वहसि? तवापि च विवेकः विचारः, यातः? नष्टः? अत्राप्रस्तुतेन काश्यप्याः खलवहनकीर्त्तनेन कस्यचित् प्रस्तुतस्य महात्मनो दुर्जनपोषणस्योपस्थितेः समात् समप्रतीतिरूपाप्रस्तुतप्रशंसा। गीतिवृत्तम् ॥ ६७ ॥

अन्येति।—विद्यावतां विदुषां, जगतां हितमयी हितसाधनी, मनसः प्रवृत्तिः अन्या अपरा, अलौकिकीत्यर्थः, वचनावलीनां वाक्प्रपञ्चानां, काऽपि विशिष्टेत्यर्थः, रचना विन्यासः, अन्यैव अपरैव, लोकातिशायिनीत्यथः, कृतिः कार्य्यञ्च, लोकोत्तरा अलौकिकी, असाधारणीत्यर्थः, आकृतिश्च अवयवश्च, आर्त्तानां दुःखितानां, हृद्या मनोहारिणीत्यर्थः, सौम्येति यावत्, किं बहुना सकलमेव सर्वव्यापार एव, गिरां वाचां, दवीयः दूरवर्त्तीत्यर्थः, अनिर्वचनीय इति यावत्। वसन्ततिलकं वृत्तम् ॥ ६८ ॥

आपद्गतः किल महाशयचक्रवर्ती
विस्तारयत्यकृतपूर्वमुदारभावम् ।
कालागुरुर्दहनमध्यगतः समन्तात्
लोकोत्तरं परिमलं प्रकटीकरोति ॥ ६९ ॥

विश्वाभिरामगुणगौरवगुम्फितानां
रोषोऽपि निर्मलधियां रमणीय एव ।
लोकम्पृणैः परिमलैः परिपूरितस्य
काश्मीरजस्य कटुताऽपि नितान्तरम्या ॥ ७० ॥

आपद्गत इति ।—महाशयचक्रवर्ती महात्मा जनः, आपद्गतः किल विपद्ग्रस्तोऽपि, अकृतपूर्वं पूर्वादपि अधिकमिति यावत्, उदारभावं महाशयत्वं, विस्तारयति प्रकाशयति, तथा हि, कालागुरुः कृष्णागुरुः, गन्धद्रव्यविशेषः इत्यर्थः, दहनमध्यगतः अग्निमध्यस्थितः सन्, समन्तात् सर्वतः, लोकोत्तरम् अलौकिकम्, अतिमनोहरमित्यर्थः, परिमलं सौरभं, प्रकटीकरोति आविष्करोति । अत्र एकस्य प्रकटीकरणरूपस्य सामान्यधर्मस्य पृथङ्निर्देशात् प्रतिवस्तूपमाऽलङ्कारः । तथा च दर्पणः, "प्रतिवस्तूपमा सा स्यात् वाक्ययोर्गम्य-साम्ययोः । एकोऽपि धर्मः सामान्यो यत्र निर्दिश्यते पृथक् ॥" इति । वसन्ततिलकं वृत्तम् ॥ ६९ ॥

विश्वेति ।—विश्वाभिरामाणां जगन्मनोहराणां, गुणानां शील-सौन्दर्यादीनां, गौरवेण गुम्फितानाम् अलङ्कृतानाम् इत्यर्थः, निर्मलधियां विशुद्धमतीनां, साधूनामिति शेषः, रोषोऽपि क्रोधोऽपि, रमणीय एव मनोज्ञ एव, न्यायानुगतत्वादिति भावः ; तथा हि, लोकं पृणन्ति प्रीणयन्तीति लोकम्पृणाः तैः लोकप्रीतिकरैः इत्यर्थः, खश् प्रत्ययः ; परिमलैः सौरभैः, परिपूरितस्य भरितस्य, काश्मीरजन्मः कुङ्कुमस्य, गन्धद्रव्यभेदस्य इत्यर्थः, कटुताऽपि तीव्रताऽपि, नितान्तरम्या अतीवहृद्या । अत्रापि प्रतिवस्तूपमा । वसन्ततिलकं वृत्तम् ॥ ७० ॥

लीलालुण्ठितशारदापुरमहासम्पद्भराणां पुरो
विद्यासद्मविनिर्गलत्कणमुषो वल्गन्ति चेत् पामराः।
अद्यश्वाः फणिनां शकुन्तशिशवो दन्तावलानां वृकाः
सिंहानाञ्च सुखेन मूर्द्धसु पदं धास्यन्ति शालावृकाः॥७१॥

गीर्भिर्गुरूणां परुषाक्षराभि-
स्तिरस्कृता यान्ति नरा महत्त्वम्।
अलब्धशाणोत्कषणा नृपाणां
न जातु मौलौ मणयो वसन्ति॥७२॥

लीलेति।—विद्यासद्म विद्यागृहं, तस्मात् विनिर्गलन्तः विनिःसरन्तः, कणान् मुष्णन्ति हरन्तीति तथोक्ताः, विद्यामन्दिरे यत्किञ्चिल्लब्धज्ञाना इत्यर्थः, पामराः मूर्खाः, अविवेकिन इत्यर्थः, लीलया विलासविशेषेण इत्यर्थः, लुण्ठिताः हृताः, अधिगता इत्यर्थः, शारदापुरात् सरस्वतीमन्दिरात्, महान्तः अत्युत्कृष्टाः, सम्पद्भराः बह्वः सम्पदः यैः तेषां, लब्धविद्याऽतिशयानाम् इत्यर्थः, जनानामिति शेषः, पुरः अग्रतः, चेत् यदि, वल्गन्ति व्यापकतया विचरन्तीत्यर्थः, तदा अद्यश्वाः अद्यभवाः परदिनजाताश्च, अचिरप्रसूता इति यावत्, शकुन्तशिशवः पक्षिशावकाः, फणिनां भुजङ्गानां, वृकाः ईहामृगाः, "वोघ" इति ख्याताः कुक्कुराकारचतुर्व्याघ्रा इत्यर्थः, दन्तावलानां दन्तिनां, शालावृकाः कुक्कुराः शृगाला वा, सिंहानाञ्च मूर्द्धसु शिरःसु, सुखेन पदं धास्यन्ति दास्यन्ति। अत्र अज्ञानां विज्ञसमीपे व्यापकतया विचरणं शकुन्तशिशूनां सर्पशिरसि, वृकाणां हस्तिशिरसि, व्याघ्राणां सिंहशिरसि च पदनिधानमिवेति बिम्बानुबिम्बप्रत्यायनादसम्बन्धे सम्बन्धरूपातिशयोक्तिरलङ्कारः। शार्दूलविक्रीडितं वृत्तम्॥७१॥

गीर्भिरिति।—नरा मानवाः, गुरूणां पित्रादीनां, "गुरुर्गीष्पतिपित्राद्योः" इत्यमरः; परुषाक्षराभिः कटुभिरित्यर्थः, गीर्भिः वाग्भिः, तिरस्कृताः निर्भर्त्सिताः सन्तः, महत्त्वं यान्ति प्राप्नुवन्ति, ज्ञानलाभैरिति भावः; तथा हि, मणयः रत्नानि, न लब्धं शाणेन शाणाख्ययन्त्रेण, उत्कषणम् उद्घर्षणं यैः तथाभूताः, जातु कदाचिदपि, नृपाणां राज्ञां,

वहति विषधरान् पटीरजन्मा
शिरसि मसीपटलं दधाति दीपः ।
विधुरपि भजतेतरां कलङ्कं
पिशुनजनं खलु बिभ्रति क्षितीन्द्राः ॥ ७३ ॥

सत्पूरुषः खलु हिताचरणैरमन्द-
मानन्दयत्यखिललोकमनुक्त एव ।
आराधितः कथय केन करैरुदारै-
रिन्दुर्विकाशयति कैरविणीकुलानि ? ॥ ७४ ॥

---

मौलौ किरीटे, "चूडा किरीटं केशाश्च संयता मौलयस्त्रयः" इत्यमरः ; न नमन्ति न राजन्ते इत्यर्थः, शाखाघर्षिता एव वसन्तीति भावः । अत्रोभयो-र्वाक्ययोर्बिम्बानुबिम्बप्रतीतेर्दृष्टान्तालङ्कारः ; तथा च दर्पणः, "दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम्" इति । उपजातिवृत्तम् ॥ ७२ ॥

वहतीति ।—पटीरजन्मा चन्दनतरुः, विषधरान् भुजङ्गान्, वहति धारयति, दीपः शिरसि शिखायां, मसीपटलं कज्जलसङ्घं, दधाति, विधु-रपि चन्द्रोऽपि, कलङ्कं भजतेतराम् अतिशयेन धारयति, क्षितीन्द्राः राजानः, पिशुनजनं दुर्जनं, बिभ्रति खलु पुष्णन्त्येवेत्यर्थः । अत्रैकस्य सामान्यधर्मस्य पृथङ्निर्देशात् प्रतिवस्तूपमाऽलङ्कारः ; तथा च दर्पणः, "प्रतिवस्तूपमा सा स्यात् वाक्ययोर्गम्य-साम्ययोः । एकोऽपि धर्मः सामान्यो यत्र निर्दिश्यते पृथक् ॥" इति । पुष्पिताग्रा वृत्तम् "अयुजि नयुगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रा" इति तल्लक्षणात् ॥ ७३ ॥

सत्पुरुष इति ।—सत्पुरुषः सज्जनः, अनुक्त एव अकथितोऽपीत्यर्थः, हिताचरणैः शुभानुष्ठानैः, अखिलं समस्तं, लोकम्, आनन्दयति खलु प्रीणा-यत्येव, तथा हि, इन्दुश्चन्द्रः, केन जनेन, आराधितः सन् उदारैः महद्भिः, जगदानन्दकरैरिति भावः, करैः अंशुभिः, किरणैरित्यर्थः, "बलिहस्तांशवः कराः" इत्यमरः ; कैरविणीकुलानि कुमुदिनीवृन्दानि, विकाशयति ? प्रस्फोटयति ? कथय ? न केनापि आराधितः, किन्तु स्वयमेव विकासय-तीत्यर्थः । अत्रापि दृष्टान्तालङ्कारः । वसन्ततिलकं वृत्तम् ॥ ७४ ॥

कृतमपि महोपकारं पय इव पीत्वा निरातङ्कम्।
प्रत्युत हन्तुं यतते काकोदरसोदरः खलो जगति ॥ ७५ ॥

पाण्डित्यं परिहृत्य यस्य हि कृते बन्दित्वमालम्बितं
दुष्प्रापं मनसाऽपि यो गुरुतरैः क्लेशैः पदं प्रापितः।
रूढस्तत्र स चेन्निगीर्य्य सकलां पूर्वोपकारावलीं
दुष्टः प्रत्यवतिष्ठते तदधुना कस्मै किमाचक्ष्महे ? ॥ ७६ ॥

परार्थव्यासङ्गादुपजहदपि स्वार्थपरता-
मभेदैकत्वं यो वहति गुरु भूतेषु सततम्।

कृतमिति।—काकोदरः भुजङ्गः, तत्सोदरः तत्सदृश इत्यर्थः, खलः दुर्जनः, जगति कृतमपि महान्तमुपकारं पय इव दुग्धमिव, पीत्वा भक्षयित्वा, निरातङ्कं निःशङ्कं यथा तथा, प्रत्युत वैपरीत्ये, हन्तुं हिंसितुं, यतते उद्यच्छति, यथा दुग्धपोषितः सर्पः पोष्टारं निहन्ति, तथा दुर्जनः कृतोपकारं सुजनं हन्तीत्यर्थः। उपमाऽलङ्कारः। उद्गीति वृत्तम्, "आर्य्याशकलद्वितये विपरीते पुनरिहोद्गीतिः" इति लक्षणात् ॥ ७५ ॥

पाण्डित्यमिति।—यस्य जनस्य, कृते निमित्तं, पाण्डित्यं विद्यावत्त्वं, परिहृत्य परित्यज्य, बन्दित्वं स्तुतिपाठकत्वम्, आलम्बितं हि गृहीतमेव, विद्वान् हि कमपि बन्दिभावेन कल्पितस्तवैर्नाराधयति, मया तु यस्याभ्युन्नतये परतोषणमपि कल्पितस्तुतिभिराचरितमिति भावः, यः मनसाऽपि दुष्प्रापं दुर्लभं, पदं गुरुतरैः अतिमहद्भिः, क्लेशैः प्रापितः नीतः, बहुभिः क्लेशैः पदप्रदातारमाराध्य मया यः समुन्नतं पदं प्रापित इति यावत्, स जनः, तत्र पदे, रूढः बद्धमूलः, लब्धप्रतिष्ठः सन् इति भावः, चेत् यदि, सकलां सर्वां, पूर्वोपकारावलीं पूर्वकृतोपकारसमूहं, निगीर्य्य विनाश्य, अस्वीकृत्येति यावत्, दुष्टः सन् प्रत्यवतिष्ठते प्रतिकूलतया वर्त्तते, तत् तदा, कस्मै जनाय, किम् आचक्ष्महे ? कथयामः ? न किमप्यत्र कथयितुमशक्नोमि भावः। शार्दूलविक्रीडितं वृत्तम् ॥ ७६ ॥

परार्थेति।—यः पुरुषः, साधुरित्यर्थः, परमात्मा च, स्वार्थपरतां स्वार्थसिद्धीच्छाम्, उपजहदपि त्यजन्नपि, परार्थव्यासङ्गात् परार्थनिष्पादनासक्तेः,

स्वभावात् यस्यान्तः स्फुरति ललितोदात्तमहिमा
समर्थो यो नित्यं स जयतितरां कोऽपि पुरुषः ॥ ७७ ॥
वंशभवो गुणवानपि सङ्गविशेषेण पूज्यते पुरुषः ।
न हि तुम्बीफलविकलो वीणादण्डः प्रयाति महिमानम् ॥ ७८ ॥
अमितगुणोऽपि पदार्थो दोषेणैकेन निन्दितो भवति ।
निखिलरसायनमहितो गन्धेनोग्रेण लशुन इव ॥ ७९ ॥
उपकारमेव तनुते विपद्गतः सद्गुणो नितराम् ।
मूर्च्छां गतो मृतो वा निदर्शनं पारदोऽत्र रसः ॥ ८० ॥

भूतेषु प्राणिषु, सततं गुरु अधिकम्, अभेदैकत्वं भेदेऽपि अभिन्नदृष्ट्यव-धारेण एकत्वम्, भेदे सति एकत्वमद्वितीयत्वञ्च, "सर्वं खल्विदं ब्रह्म" इति श्रुतेः सर्वेषां ब्रह्माभिन्नत्वात्; वहति धत्ते,तथा यस्य पुरुषस्य, ललितोदात्त-महिमा अतिमनोहरो महान् महिमा, स्वभावादेव अन्तः,सर्वेषां प्राणिना-मिति शेषः, स्फुरति उल्लसति, यः पुरुषः, नित्यं सततं, समर्थः प्रभुः,स्वाधीन इत्यर्थः, स कोऽपि पुरुषः जयतितरां सर्वोत्कर्षेणातीव राजते इत्यर्थः। अत्रार्थश्लेषः; तथा च दर्पणे, "श्लेषः स्वभावादेकार्थैः शब्दैरनेकार्थ-वाचनम्" इति। शिखरिणी वृत्तम् ॥ ७७ ॥

वंशभव इति।—वंशभवः सद्वंशजातः, वेणुजश्च, गुणवान् विनयादि-गुणाकरः,रज्जुवश्च,पुरुषः सङ्गविशेषेण साधुसङ्गत्वादिना,पूज्यते आद्रियते; वीणादण्डः तुम्बीफलविकलः तुम्बीफलविरहितः, महिमानं माहात्म्यं, न हि प्रयाति नैव लभते। अत्र वैधर्म्येण दृष्टान्तालङ्कारः ॥ ७८ ॥

अमितेति।—अमिताः प्रभूताः, गुणा यस्य तादृशोऽपि, पदार्थः वस्तु, एकेन एकमात्रेण, दोषेण निखिलं समस्तं, रसायने पारदादिशोधने जरादिनाशनौषधविशेषे वा, महितः आदृतः, वैद्यैरिति शेषः, लशुनः कन्दविशेषः, उग्रेण तीक्ष्णेन, गन्धेनेव निन्दितः भवति। उपमा-लङ्कारः ॥ ७९ ॥

उपकारमिति।—सद्गुणः शोभनगुणशाली पुरुषः, विपद्गतः आपन्नः, अपि,आपद्ग्रस्तः, नितराम् अतिशयेन, उपकारमेव तनुते विस्तारयति

वनान्ते खेलन्ती शशकशिशुमालोक्य चकिता
भुजप्रान्तं भर्त्तुर्भजति भयहर्त्तुः सपदि या।
अहो! सेयं सीता दशवदननीता हलरदैः
परीता रक्षोभिः श्रयति विवशा कामपि दशाम्?॥ ८१॥
पुरो गीर्वाणानां निजभुजबलाहोपुरुषिकाम्
अहो! कारं कारं पुरभिदि शरं सम्मुखयतः।
स्मरस्य स्वर्बालानयनशुभमालार्चनपदं
वपुः सद्यो भालानलभसितजालास्पदमभूत्॥ ८२॥

करीतोयर्थः, अत्र विषये, मूर्च्छान् आयुर्वेदोक्तसंस्कारविशेषं, गतः, मृतो वा प्रक्रियाविशेषेण भस्मीकृत इति भावः, पारदो रसः पारदाख्यो रसः, निदर्शनं दृष्टान्तः। अत्रापि दृष्टान्त एवालङ्कारः। उपगीति वृत्तम्॥ ८०॥

वनान्ते इति।—वनान्ते वनसीमायां, खेलन्ती क्रीडन्ती, या शशकशिशुं शशकाख्यमृगविशेषशावकम्, आलोक्य दृष्ट्वा, चकिता भीता सती, सपदि तत्क्षणं, भयहर्त्तुः भीतिनाशकस्य, भर्त्तुः स्वामिनः, रामस्य इत्यर्थः, भुजप्रान्तं भजति आश्रयति, अहो! खेदे, सा सीता, दशवदनेन रावणेन, नीता हृता, अत एव विवशा पराधीना सती, हलरदैः लाङ्गलफलकतुल्य-दन्तैः, रक्षोभिः निशाचरैः, परीता परिवेष्टिता, कामपि अनिर्वचनीयां, दशां दुःखावस्थामित्यर्थः, श्रयति प्राप्नोति। शिखरिणी वृत्तम्॥ ८१॥

पुर इति।—गीर्वाणानां देवानाम् इन्द्रादीनां, पुरः अग्रतः, निजभुजबलस्य स्वबाहुवीर्य्यस्य, आहोपुरुषिकां अहमेव समर्थः नान्य इत्याकार-दर्पमित्यर्थः, कारं कारं पुनः पुनः कृत्वा, आभीक्ष्ण्ये णमुल्; पुरभिदि शम्भौ, शरं सम्मुखयतः सन्दधतः, स्मरस्य कामस्य, स्वर्बालानां सुरसुन्दरीणां, नयनशुभमालया नेत्ररूपया शोभनया स्रजा, अर्चनपदं पूजास्थानं, वपुः शरीरं, सद्यः सपदि, भालानलेन ललाटाग्निना, भसितजालानां भस्मसमूहानाम्, आस्पदं पात्रम्, अभूत् भस्मसादभूदित्यर्थः, अहो! खेदे। शिखरिणी वृत्तम्॥ ८२॥

युक्तं सभायां खलु मर्कटानां
शाखास्तरूणां मृदुलासनानि ।
सुभाषितं चीत्कृतिरातिथेयी
दन्तैर्नखाग्रैश्च विपाटितानि ॥ ८३ ॥

किं तीर्थं ? हरिपादपद्मभजनं, किं रत्नम् ? अच्छा मतिः,
किं शास्त्रम् ? श्रवणेन यस्य गलति द्वैतान्धकारोदयः ।
किं मित्रं सततोपकाररसिकम् ? तत्त्वावबोधः सखे !
कः शत्रुर्वद खेददानकुशलः ? दुर्वासनासञ्चयः ॥ ८४ ॥

युक्तमिति ।—मर्कटानां वानराणां, सभायां समाजे, तरूणां वृक्षाणां, शाखाः मृदुलानि कोमलानि, आसनानि उपवेशनस्थानानि, चीत्कृतिः चीत्कारः, सुभाषितं सुष्ठु आलापः, दन्तैः नखाग्रैश्च विपाटितानि परस्परं विदलितानि, आतिथेयी अतिथिसत्कारः, अतिथौ साध्वीति ढक्; युक्तं खलु उचितमेवैतदित्यर्थः । उपजाति वृत्तम् ॥ ८३ ॥

किमिति ।—तीर्थं पुण्यस्थानं किम्? हरेर्नारायणस्य, पादपद्मभजनं चरणपङ्कजसेवनमित्युत्तरम् । रत्नं किम्? अच्छा निर्मला, मतिः प्रज्ञेत्युत्तरम् । शास्त्रं किम्? यस्य श्रवणेन द्विधा इतं द्वीतं तस्य भावः द्वैतं भेदज्ञानमित्यर्थः, तदन्धकार इव द्वैतान्धकारः, तस्य उदयः उद्रेकः, गलति नश्यति, "एकमेवाद्वितीयं ब्रह्म" इति ज्ञानं यस्य श्रवणेन उदेति तदेव शास्त्रमित्युत्तरम् । हे सखे! सततोपकाररसिकं सर्वदा उपकारपरं, मित्रं किम्? तत्त्वावबोधः ब्रह्मज्ञानमित्युत्तरम् । खेददान-कुशलः दुःखदाननिपुणः, शत्रुः कः? वद ब्रूहि, वाक्यार्थः कर्म; दुर्वासनानां दुष्टानां वासनानां संसारस्पृहाणां, सञ्चयः समूहः इत्युत्तरम् । अत्र प्रत्युक्तात् वस्तुनो हरिपादपद्मभजनादेस्तादृशानामन्येषां पुण्य-क्षेत्रादीनामर्थानां निरासात् परिसङ्ख्याऽलङ्कारः । तथा च दर्पणः, "प्रश्नादप्रश्नतो वाऽपि कथितात् वस्तुनो भवेत् । तादृगन्यव्यपोहश्चेत् शाब्द आर्थोऽथवा भवेत् ॥ परिसङ्ख्या—॥" इति । शार्दूलविक्रीडितं वृत्तम् ॥ ८४ ॥

निष्णातोऽपि च वेदान्ते साधुत्वं नैति दुर्जनः।
चिरं जलनिधौ मग्नो मैनाक इव मार्दवम् ॥ ८५ ॥
नैर्गुण्यमेव साधीयो धिगस्तु गुणगौरवम्।
शाखिनोऽन्ये विराजन्ते खण्ड्यन्ते चन्दनद्रुमाः ॥ ८६ ॥
परोपसर्पणानन्तचिन्तानलशिखाशतैः।
अचुम्बितान्तःकरणाः साधु जीवन्ति पादपाः ॥ ८७ ॥
शून्येऽपि च गुणवत्तामातन्वानः स्वकीयगुणजालैः।
विवराणि मुद्रयन् द्रागूर्णायुरिव सुजनो जयति ॥ ८८ ॥

निष्णात इति।—दुर्जनः वेदान्ते तत्त्वावबोधकशास्त्रे, निष्णातोऽपि प्रसिद्धिं गतोऽपि, चिरं जलनिधौ समुद्रे, मग्नो मैनाकः हिमगिरिसुतः पर्वतविशेषः, मार्दवमिव कोमलतामिव, साधुत्वं सज्जनत्वं, न च एति नैव प्राप्नोति, "अङ्गारः शतधौतेन मलिनत्वं न मुञ्चति" इति भावः। उपमाऽलङ्कारः ॥ ८५ ॥

नैर्गुण्यमिति।—निर्गुणस्य भावः नैर्गुण्यं, तदेव साधीयः अतिशयेन साधु. गुणगौरवं गुणवत्ताऽतिशयं, धिक् अस्तु निन्दामीत्यर्थः; "धिङ्-निर्भर्त्सननिन्दयोः" इत्यमरः; तथा हि, अन्ये अपरे, चन्दनभिन्ना इत्यर्थः, शाखिनः तरवः, विराजन्ते शोभन्ते, चन्दनद्रुमाः चन्दनतरवः, खण्ड्यन्ते छिद्यन्ते। अत्र विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः। तथा च, दर्पणः, "सामान्यं वा विशेषेण विशेषस्तेन वा यदि। कार्यञ्च कारणेनेदं कार्येण च समर्थ्यते ॥ साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा ततः ॥" इति। अनुष्टुप् वृत्तम् ॥ ८६ ॥

परेति।—पादपा वृक्षाः, परेषाम् उपसर्पणम् अनुवृत्तिः, तत्र या अनन्तचिन्ता अशेषदुर्भावना, सैव अनलः अग्निः, तस्य शिखाशतैः ज्वालासमूहैः,न चुम्बितं न स्पृष्टम्, अन्तःकरणं चित्तं येषां तथाभूताः, अपरायत्तजीविता सन्तः इति भावः, साधु सम्यक्, सुखेनेति भावः,जीवन्ति प्राणान् धारयन्ति। अत्राप्रस्तुतेन पादपवृत्तान्तेन कस्यचिदपराधीनवृत्तेः प्रस्तुतस्यावगतेः समात् समप्रतीतिरूपाप्रस्तुतप्रशंसा। अनुष्टुप् वृत्तम् ॥ ८७ ॥

शून्ये इति।—सुजनः साधुः, शून्ये निरवलम्बदेशे, शून्यहृदये च,

खलः सज्जनकार्पासरक्षणैकहुताशनः।
परदुःखाग्निशमने मारुतः केन वर्ण्यताम्? ॥ ८९ ॥

परगुह्यगुप्तिनिपुणं गुणमयमखिलैः समीहितं नितराम्।
ललिताम्बरमिव सज्जनमाखव इव दूषयन्ति खलाः ॥ ९० ॥

कारुण्यकुसुमाकाशः शान्तिशैत्यहुताशनः।
यशःसौरभ्यलशुनः खलः सज्जनदुःखदः ॥ ९१ ॥

---

नितान्तमृदुहृदयेऽपि चेत्यर्थः, स्वकीयानां निजानां, गुणानां तन्तूनां, विनयादिधर्माणाञ्च, जालैः सङ्घैः, गुणवत्तां तन्तुमत्तां, विनयादिगुणशालित्वञ्च, आतन्वानः विस्तारयन्, तथा द्राक् झटिति, विवराणि शून्यभागान्, दोषांश्च, मुद्रयन आच्छादयन् सन्, ऊर्णायुरिव "माकड़सा" इत्याख्यजीवभेद इव, जयति राजते। श्लेषमूलोपमाऽलङ्कारः। आर्य्या वृत्तम् ॥ ८८ ॥

खल इति।—सज्जनाः साधव एव, कार्पासाः तूलाः, तेषां रक्षणे एकः अद्वितीयः, हुताशनः अग्निः, सज्जनदहन इति भावः, तथा परेषां दुःखमेव अग्निः तस्य शमने निवर्त्तने, मारुतः पवनः, परदुःखोद्दीपक इत्यर्थः, खलः दुर्जनः, केन जनेन, वर्ण्यताम्? वर्णयितुं शक्यताम्? न केनापीत्यर्थः। अत्र रूपकालङ्कारः। अनुष्टुप् वृत्तम् ॥ ८९ ॥

परेति।—खला दुर्जनाः, आखव इव मूषिका इव, परेषां गुह्यस्य गोपनीयस्य दोषस्य स्थानस्य च, गुप्तौ संवरणे, निपुणं क्षमं, गुणमयं विनयादिगुणाकरं, तन्तुमयञ्च, अखिलैः समस्तैः जनैः, नितराम् अतिशयेन, समीहितं सम्प्रार्थितं, ललिताम्बरमिव शोभनं वसनमिव, सज्जनं साधुं, दूषयन्ति निन्दन्ति, छिद्रयन्ति च। श्लेषोपमाऽलङ्कारः। आर्य्या वृत्तम् ॥ ९० ॥

कारुण्येति।—खलः दुर्जनः, कारुण्यमेव कुसुमं पुष्पं, तस्य आकाशः, यथा आकाशे पुष्पं न तिष्ठति, तथा दुर्जने करुणा न विद्यते इत्यर्थः, शान्तिरेव शैत्यं तस्य हुताशनः अग्निः, यथा अग्निः शैत्यं नाशयति, तथा दुर्जनः लोकानां शान्तिसुखं नाशयतीत्यर्थः; यश एव सौरभ्यं सौरभं

धत्ते भरं कुसुमपत्रफलावलीनां
मर्मव्यथां स्पृशति शीतभवां रुजञ्च ।
यो देहमर्पयति चान्यसुखस्य हेतो-
स्तस्मै वदान्यगुरवे तरवे नमोऽस्तु ॥ ८२ ॥
हालाहलं खलु पिपासति कौतुकेन
कालानलं परिचुचुम्बिषति प्रकामम् ।
व्यालाधिपञ्च यतते परिरब्धुमद्धा
यो दुर्जनं वशयितुं कुरुते मनीषाम् ॥ ८३ ॥

लोकानामिति भावः, तस्य लशुनः दुर्गन्धकन्दविशेषः, यथा लशुनोऽन्यान् वस्तूनि दुर्गन्धेन दूषयति, तथा दुर्जनः निर्दोषान् जनान् आरोपितैः दुष्कृतैः दूषयतीत्यर्थः, अत एव सज्जनानां साधूनां, दुःखं ददातीति दुःखदः सन्तापक इत्यर्थः । अत्र रूपकमलङ्कारः । अनुष्टुप् वृत्तम् ॥ ८१ ॥

धत्ते इति ।—यः कुसुमानां पत्राणां फलानाञ्च आवल्यः श्रेणयः तासां, भरम् अतिशयं, धत्ते धारयति, शीतभवां मर्मव्यथां मर्मव्यथा-दायिनीं, रुजं क्लेशं, स्पृशति अनुभवति, तथा अन्येषां जनानां, सुखस्य सांसारिकस्य हेतोः, देहम् अर्पयति ददाति च, सांसारिकजनाः काष्ठार्थं सजीववृक्षं छिन्दन्तीति भावः, तस्मै वदान्यानां दातॄणां, गुरवे प्रवराय, तरवे वृक्षाय, नमोऽस्तु तं वृक्षं प्रणमामीत्यर्थः । फल-पुष्प-पत्राणां छायायाः स्वदेहस्य च दानात् वदान्यगुरुत्वमिति भावः । अत्राप्रस्तुतेन तरुवृत्तान्तेन कस्यचित् प्रस्तुतस्य वदान्यप्रवरस्योपस्थितेः समात् सम-प्रतीतिरूपाप्रस्तुतप्रशंसा । वसन्ततिलकं वृत्तम् ॥ ८२ ॥

हालाहलमिति ।—यः दुर्जनं खलं, वशयितुं वशीकर्त्तुं, मनीषां बुद्धिं, वाञ्छामित्यर्थः, कुरुते, स जनः, यच्छब्दोपादानेन तच्छब्दस्योपस्थिति-नियमात् ; कौतुकेन कुतूहलेन, हालाहलं कालकूटं, पिपासति खलु पातुमिच्छत्येव, कालानलं कालाग्निं, संहारकमग्निमित्यर्थः, प्रकामं स्वच्छन्दं यथा तथा, परिचुचुम्बिषति परिचुम्बितुमिच्छति, व्यालाधिपं भुजङ्गप्रवरं, परिरब्धुम् आलिङ्गितुम्, अद्धा हठात्, मणिमन्त्रादिकौशल-

दीनानि प्रति परिहाय शुष्कशस्या-
औदार्य्यं प्रकटयतो महीधरेषु ।
औन्नत्यं परममवाप्य दुर्मदस्य
ज्ञातोऽयं जलधर ! ते यथा विवेकः ॥ ८४ ॥

गिरयो गुरवस्तेभ्योऽप्युर्वी गुर्वी ततोऽपि जगदण्डम् ।
तस्मादप्यतिगुरवः प्रलयेऽप्यचला महात्मानः ॥ ८५ ॥

मन्तरेणेति भावः, यतते उद्यच्छति च। अत्रान्यस्य धर्मं कथमन्यो वहतु इति दुर्जनवशीकरणं हालाहलपानादिवदिति सहृदयप्रत्यायनाद-सम्भवद्वस्तुसम्बन्धरूपनिदर्शनाऽलङ्कारभेदः। तथा च दर्पणः, "सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वाऽपि कुत्रचित्। यत्र बिम्बानुबिम्बत्वं बोधयेत् सा निदर्शना॥" इति। वसन्ततिलकं वृत्तम् ॥ ८३ ॥

दीनानीति।—हे जलधर ! दीनानि क्षीणानि, शुष्कशस्यानि प्रति परिहाय परित्यज्य, दुर्मदस्य औद्धत्यस्य, परमम् औन्नत्यं वृद्धिम्, अवाप्य प्राप्य, अतिशयेनात्मानमुन्नमय्येत्यर्थः, महीधरेषु पर्वतेषु, निष्प्रयोजनेषु इति भावः, औदार्य्यं दानशीलत्वं, प्रकटयतः विस्तारयतः, ते तव, यथा विवेकः विचारः ज्ञानं वा, अस्ति इति शेषः, अयं विवेकः, ज्ञातः विदितः, लोकैरस्माभिर्वा इति शेषः। अत्राप्रस्तुतेन जलधरवृत्तान्तेन कस्यचित् प्रस्तुतस्य दरिद्रान् विहाय धनिकेषु धनं वर्षतो दातुरूपस्थितेः समात् समप्रतीतिरूपाप्रस्तुतप्रशंसा। "दरिद्रान् भर कौन्तेय ! मा प्रयच्छेश्वरे धनम्। व्याधितस्यौषधं पथ्यं नीरुजस्य किमौषधैः ?" ॥ इति भारतीय-श्लोकमनुसृत्योक्तमिदम्। प्रहर्षिणी वृत्तं, "त्र्याशाभिर्मनजरगाः प्रहर्षि-णीयम्" इति तल्लक्षणात् ॥ ८४ ॥

गिरय इति।—गिरयः पर्वताः,गुरवः महान्तः, उर्वी पृथ्वी, तेभ्योऽपि गिरिभ्योऽपि, गुर्वी महती, जगदण्डं ब्रह्माण्डमित्यर्थः, ततोऽपि उर्व्या अपि, गुर्वित्यर्थः, महात्मानः महापुरुषाः, प्रलयेऽपि अचलाः सन्मार्गा-दभ्रष्टा इत्यर्थः, तस्मादपि ब्रह्माण्डादपि, अतिगुरवः अतिशयेन महान्तः। अत्रोत्तरोत्तरोत्कर्षप्रतिपादनात् सारालङ्कारः। तथा च दर्पणः, "उत्तरो-त्तरमुत्कर्षो वस्तुनः सार उच्यते" इति। आर्य्या वृत्तम् ॥ ८५ ॥

व्योम्नि स वासं कुरुते चित्रं निर्माति सुन्दरं पवने ।
रचयति रेखाः सलिले चरति खले यस्तु सत्कारम् ॥ ८६ ॥

हारं वक्षसि केनापि दत्तमज्ञेन मर्कटः ।
लेढि जिघ्रति सङ्क्षिप्य करोत्युन्नतमाननम् ॥ ८७ ॥

मलिनेऽपि रागपूर्णां विकसितवदनामनल्पजल्पेऽपि ।
त्वयि चपलेऽपि च सरसां भ्रमर! कथं वा सरोजिनीं त्यजसि?॥८८

व्योम्नीति।—यस्तु जनः खले दुर्जने, सत्कारम् उपकृतिं, चरति करोति, सः व्योम्नि आकाशे, वासं वासगृहमित्यर्थः, कुरुते निर्मिमीते, पवने वायौ, सुन्दरं शोभनं, चित्रम् आलेख्यं, निर्माति रचयति,सलिले जले, रेखाः अङ्कान्, रचयति विन्यस्यति ; यथा आकाशे वासगृहं न तिष्ठति, वायौ रचितं चित्रं वेगात् दूरे गच्छति, सलिले रेखा नावतिष्ठते, तथा दुर्जने कृता उपकृतिर्न तिष्ठतीति भावः। अत्राप्यन्यस्य धर्मं कथमन्यो वहतु इति दुर्जने कृतोपकारः आकाशकृतगृहादिवदिति साहश्यावगमा-दसम्भवद्वस्तुसम्बन्धरूपनिदर्शनाभेदः। आर्य्या वृत्तम् ॥ ८६ ॥

हारमिति।—मर्कटः वानरः, केनापि अज्ञेन मूढेन, वक्षसि दत्तम् अर्पितं, हारं लेढि जिह्वया स्पृशतीत्यर्थः, जिघ्रति आजिघ्रतीत्यर्थः, तथा सङ्क्षिप्य सङ्कोच्य, आननं मुखम्, उन्नतं करोति, यस्य यत् योग्यं न, स कदाऽपि तन्मर्म न जानातीति भावः। स्वभावोक्तिरलङ्कारः। तथा च दर्पणः, "स्वभावोक्तिर्दुरूहार्थस्वक्रियारूपवर्णनम्" इति। अनुष्टुप् वृत्तम् ॥ ८७ ॥

मलिन इति।—हे भ्रमर! त्वयि मलिनेऽपि कृष्णवर्णेऽपि, सदोषेऽपि च, रागपूर्णाम् अनुरागभृतां, त्वयि अनल्पजल्पेऽपि बहुभाषिणि अपि, बहुभाषित्वं विरक्तिकरमिति भावः, वाचालेऽपि च, विकसितवदनां प्रफुल्लमुखीम्, अविरक्तामिति भावः, त्वयि चपले चञ्चलेऽपि, धृष्टेऽपि च, सरसां रसयुक्ताम्, अनुकूलाञ्च, सरोजिनीं पद्मिनीं, कथं वा केन हेतुना वा, त्यजसि? नैव त्यक्तुमर्हसीत्यर्थः। अत्राप्रस्तुतेन भ्रमरवृत्तान्तेन कस्यचित् प्रस्तुतस्य दुराचारस्य अनुरागिणीं सतीं भार्य्यां त्यक्तुमुद्यतस्य पत्युरुपस्थितेः समात् समप्रतीतिरूपाप्रस्तुतप्रशंसा। गीतिवृत्तम् ॥ ८८ ॥

स्वार्थं धनानि धनिकात् प्रतिगृह्णतो य-
दास्यं भजेन्मलिनतां किमिदं विचित्रम् ? ।
गृह्णन् परार्थमपि वारिनिधेः पयोऽपि
मेघोऽयमेति सकलोऽपि च कालिमानम् ॥ ९९ ॥

जनकः सानुविशेषो जातिः काष्ठं भुजङ्गमैः सङ्गः ।
स्वगुणैरेव पटीरज ! यातोऽसि तथाऽपि महिमानम् ॥ १०० ॥

कस्मै हन्त ! फलाय सज्जन ! गुणग्रामार्जने सज्जसि ?
स्वात्मोपस्करणाय चेन्मम वचः पथ्यं समाकर्णय ।
ये भावा हृदयं हरन्ति नितरां शोभाभरैः सम्भृता-
स्तैरेवास्य कलेः कलेवरपुषो दैनन्दिनं वर्धनम् ॥ १०१ ॥

स्वार्थमिति।—स्वार्थं स्वप्रयोजनार्थं, धनिकात् धनिनः सकाशात्, धनानि प्रतिगृह्णतः प्रतिग्रहेण स्वीकुर्वतः जनस्य, आस्यं मुखं, यत् मलिनतां मालिन्यं, भजेत् प्राप्नुयात्, इदं मुखमालिन्यभजनं, किं विचित्रम् ? आश्चर्यम् ? नैव विचित्रमित्यर्थः ; तथा हि, अयं सकलोऽपि मेघः परार्थमपि जनपालनार्थमेव, वारिनिधेः समुद्रात्, पयोऽपि जलमपि, किमुत रत्नादिकमित्यपिशब्दार्थः, गृह्णन् कालिमानं कृष्णत्वम्, एति प्राप्नोति। अत्र विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासालङ्कारः। वसन्ततिलकं वृत्तम् ॥ ९९ ॥

जनक इति।—पटीरज ! हे चन्दनतरो !, तव जनकः पिता, सानुविशेषः मलयपर्वतैकदेश इत्यर्थः, जातिः काष्ठं दारु, भुजङ्गमैः सर्पैः, खलैरिति भावः, सङ्गः सहवासः, तथाऽपि इत्थं वंश-जाति-सङ्गापकर्षेऽपीत्यर्थः, स्वगुणैरेव निजैः स्वाभाविकैः सौरभादिभिरेव, महिमानं माहात्म्यं, यातोऽसि प्राप्तोऽसि। अत्राप्रस्तुतेन चन्दनवृत्तान्तेन कस्यचित् प्रस्तुतस्य निकृष्टजातेः सत्सङ्गवर्जितस्यापि स्वाभाविकगुणवत्तां प्रकटयत उपस्थितेः समात् समप्रतीतिरूपाप्रस्तुतप्रशंसा। आर्य्या वृत्तम् ॥ १०० ॥

कस्मै इति।—सज्जन ! हे साधो ! हन्त ! खेदे, कस्मै फलाय किं फलसिद्ध्यर्थमित्यर्थः, गुणग्रामाणां गुणसमूहानाम्, अर्जने उपार्जने, सज्जसि ?

धूमायिता दश दिशो दलितारविन्दा
देहं दहन्ति दहना इव गन्धवाहाः।
त्वामन्तरेण मृदुताम्रदलाम्रमञ्जु-
गुञ्जन्मधुव्रत! मधो! किल कोकिलस्य ॥ १०२ ॥

भिन्ना महागिरिशिलाः करजाग्रजाग्र-
दुद्दामशौर्य्यनिकरैः करटिभ्रमेण।
दैवे पराचि करिणामरिणा तथाऽपि
कुत्रापि नापि खलु हा! पिशितस्य लेशः ॥ १०३ ॥

समसक्तो भवसि? स्वस्य आत्मनः स्वरूपस्य, उपस्करणाय उपकाराय, अनुकूलनाय इत्यर्थः, चेत् यदि, गुणग्रामार्जने सज्जसीति शेषः, तदा पथ्यं हितं, मम वचः समाकर्णय शृणु, शोभाभरैः सौन्दर्य्यातिशयैः, सम्भृताः सम्पूरिताः, ये भावा विषयाः, स्रक्-चन्दन-वनितादयः इत्यर्थः, नितराम् अत्यर्थं, हृदयं हरन्ति आकर्षन्ति, मोहयन्तीत्यर्थः, तैरेव भावैः, कलेवरपुषः देहकेवलपोषकस्य, अस्य कवेः कायस्य, दैनन्दिनं प्रतिदिनं, वर्द्धनं वृद्धिः, तथा च, स्वात्मोपकारार्थिना एव भावेषु कलहायमानेन प्रयत्नेन विधेयमिति भावः। यद्वा—अस्य कवेः कायुगस्य, दैनन्दिनं वर्द्धनं वृद्धिं, कुरु इति शेषः; कलियुगोचितमाचर, तेनैव आत्मोपकारो भविष्यति, न तु गुणग्रामार्जनेन इति भावः। शार्दूलविक्रीड़ितं वृत्तम् ॥ १०१ ॥

धूमायिता इति।—मृदूनि कोमलानि, ताम्राणि रक्तानि, दलानि पर्णानि यस्य तथाभूतः, यः आम्रः चूततरुः, तत्र मञ्जु मनोज्ञं, गुञ्जन् मधुव्रतः भृङ्गः यत्र तथाभूतः तत्सम्बुद्धौ, मधो! हे वसन्त! त्वामृते विना, कोकिलस्य दशदिशः धूमायिताः अन्धकारिता इत्यर्थः, न प्रीतिकर्य्य इति भावः, तथा दलितानि विकसितानि, अरविन्दानि कमलानि यैः तथाभूताः, गन्धवाहाः पवनाः, दहना इव अग्नय इव, देहं दहन्ति किल तापयन्ति एवेत्यर्थः। अत्रोपमाऽलङ्कारः, कोकिलवृत्तान्तेनाप्रस्तुतेन कस्यचित् प्रस्तुतस्य प्रियतमवन्तुविरहितस्योपस्थितेः समात् समप्रतीतिरूपा-प्रस्तुतप्रशंसा चैतयोः संसृष्टिः। वसन्ततिलकं वृत्तम् ॥ १०२ ॥

भिन्ना इति।—दैवे पराचि पराङ्मुखे सति, करिणामरिणा सिंहेन,

गर्जितमाकर्ण्य मनागङ्के मातुर्निशार्द्धजातोऽपि ।
हरिशिशुरुत्पतितुं द्रागङ्गान्याकुञ्च्य लीयते निभृतम् ॥१०४॥

किमहं वदामि खल ! दिव्यतमम् ?
गुणपक्षपातमभितो भवतः ।
गुणशालिनो निखिलसाधुजनान्
यदहर्निशं न खलु विस्मरसि ॥ १०५ ॥

रे खल ! तव खलु चरितं विदुषां मध्ये विविच्य वक्ष्यामि ।
अथवाऽलं पापात्मन् ! कृतया कथयाऽपि ते हतया ॥ १०६ ॥

---

करटिभ्रमेण करटो हस्ती भयमिति भ्रान्त्या, करजानां नखराणाम्, अग्रेषु जाग्रतां दीप्यमानानाम्, उद्दामानाम् उत्कटानां, शौर्याणां विक्रमाणां, निकराः सङ्घाः तैः, महागिरिशिलाः महत्यः पर्वतशिलाः, भिन्नाः विदारिताः, तथाऽपि कुत्रापि पिशितस्य मांसस्य, लेशः खण्डः, नापि खलु न प्राप्त एव, हा ! इति खेदे । अत्राप्रस्तुतेन सिंहवृत्तान्तेन प्रस्तुतस्य कस्यापि प्रतिकूलदैवग्रस्तोपस्थितेः समात् समप्रतीतिरूपाप्रस्तुतप्रशंसा । वसन्ततिलकं वृत्तम् ॥ १०३ ॥

गर्जितमिति ।—हरिशिशुः सिंहशावकः, निशार्द्धजातोऽपि अर्द्धरात्रप्रसूतोऽपि, मनाक् अल्पं, गर्जितं, हस्तिन इति शेषः, आकर्ण्य श्रुत्वा, द्राक् झटिति, उत्पतितुम् ऊर्ध्वमाक्रमितुम्, उल्लम्फितुमिति यावत्, अङ्गानि आकुञ्च्य कुञ्चितानि कृत्वा, मातुर्जनन्याः, सिंह्याः इति यावत्, अङ्के क्रोडे, निभृतं लीयते निस्तब्धं यथा तथा अवसरं प्रतीक्षमाणस्तिष्ठतीत्यर्थः । स्वभावोक्तिरलङ्कारः । गीतिवृत्तम् ॥ १०४ ॥

किमिति ।—हे खल ! भवतः तव, दिव्यतमम् अत्यन्तमित्यर्थः, गुणपक्षपातं गुणानुरागम्, अभितः प्रतीत्यर्थः, अहं किं वदामि ? कथयामि ? यत् यतः, गुणशालिनो निखिलसाधुजनान् सर्वान् सज्जनान्, अहर्निशं दिवारात्रं, न खलु नैव, विस्मरसि, गुणिनो जनान् सततं द्वेक्षीति भावः । प्रमिताक्षरा वृत्तं, "प्रमिताक्षरा सजससैः कथिता" इति लक्षणात् ॥१०५॥

रे इति ।—रे खल ! दुर्जन ! विदुषां पण्डितानां मध्ये, विविच्य

आनन्दमृगदावाग्निः शीलशाखिमदद्विपः।
ज्ञानदीपमहावायुरयं खलसमागमः॥ १०७॥
खलास्तु कुशलाः साधुहितप्रत्यूहकर्मणि।
निपुणाः फणिनः प्राणानपहर्तुं निरागसाम्॥ १०८॥
वदने विनिवेशिता भुजङ्गी
पिशुनानां रसनामिषेण धात्रा।
अनया कथमन्यथाऽवलीढा
न हि जीवन्ति जना मनागमन्त्राः?॥ १०९॥

विचार्य्य, तव चरितं खलु निश्चितं, वक्ष्यामि कथयिष्यामि, अथवा पापात्मन्! रे पापशील! हतया दुष्टया, तं तव, कृतया उक्तयेत्यर्थः, कथयाऽपि अलं तव प्रसङ्गोऽपि पापायेति भावः। अत्र आक्षेपालङ्कारः, तथा च दर्पणः,—"वस्तुनो वक्तुमिष्टस्य विशेषप्रतिपत्तये। निषेधाभास आक्षेपो वक्ष्यमाणोक्तगो द्विधा॥" इति। आर्य्या वृत्तम्॥ १०६॥

आनन्देति।—अयं खलेन समागमः सहवासः, आनन्द एव मृगः, तस्य दावाग्निः वनानलः, आनन्दध्वंसन इत्यर्थः, शीलमेव सुचरितमेव, शाखी वृक्षः, तस्य मदद्विपः मत्तहस्ती, सुचरितभञ्जन इत्यर्थः, तथा ज्ञानमेव दीपः तस्य महान् वायुः, वायुर्यथा दीपनिर्वापकः, तथाऽयं ज्ञानलोपकर इत्यर्थः। रूपकमलङ्कारः। अनुष्टुप् वृत्तम्॥ १०७॥

खला इति।—खलास्तु दुर्जनास्तु, साधूनां हितस्य प्रत्यूहकर्मणि विघ्नकरणे, कुशलाः पटवः; तथा हि, फणिनः सर्पाः, निरागसां निरपराधानां जनानां, साधूनामित्यर्थः, प्राणान् अपहर्तुं निपुणाः दक्षाः। अत्र कुशल-निपुणयोः पर्य्यायभेदात् वाक्ययोर्बिम्बानुबिम्बप्रतीतेश्च प्रतिवस्तूपमाऽलङ्कारः, तथा चोक्तं दर्पणे—"प्रतिवस्तूपमा सा स्यात् वाक्ययोर्गम्यसाम्ययोः। एकोऽपि धर्मः सामान्यो यत्र निर्दिश्यते पृथक्॥" इति। अनुष्टुप् वृत्तम्॥ १०८॥

वदने इति।—धात्रा विधिना, पिशुनानां खलानां, "पिशुनौ खलसूचकौ" इत्यमरः, वदने रसनामिषेण जिह्वाव्याजेन, भुजङ्गी विषधरी,

कृतं महोन्नतं कृत्यमर्जितञ्चामलं यशः।
यावज्जीवं सखे ! तुभ्यं दास्यामो विपुलाशिषः ॥ ११० ॥

अविरतं परकार्य्यकृतां सतां
मधुरिमाऽतिशयेन वचोऽमृतम्।
अपि च मानसमम्बुनिधिर्यशो
विमलशारदपार्वणचन्द्रिका ॥ १११ ॥

निर्गुणः शोभते नैव विपुलाडम्बरोऽपि ना।
आपातरम्यपुष्पश्रीशोभिता शाल्मलिर्यथा ॥ ११२ ॥

विनिवेशिता निक्षिप्ता, अन्यथा नो चेत्, कथम् अनया रसनया, अवलीढाः स्पृष्टाः, दुर्जनकटुवाग्विद्धा इति भावः, जनाः अमन्त्राः मन्त्ररहिताः सन्तः, विषहरमन्त्रेणापि अप्रतीकार्य्याः सन्तः इत्यर्थः, न हि नैव, मनाक् अल्पमात्रमपि, जीवन्ति। अत्र प्रकृतरसनानिषेधेन भुजङ्गीस्थापनादपह्नुतिरलङ्कारः, तदुक्तं दर्पणे—"प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपह्नुतिः॥" इति। मालभारिणी वृत्तं—"विषमे ससजा यदा गुरू चेत् सभरा येन तु मालभारिणीयम्॥" इति तल्लक्षणात्॥ १०९॥

कृतमिति।—हे सखे ! महोन्नतम् अतिमहत्, कृत्यं कार्य्यं, कृतम्, अमलं निर्मलं, यशश्च अर्जितं, त्वयेति शेषः, यावज्जीवं यावन्तं कालं जीवामेत्यर्थः, तावत् तुभ्यं विपुलाः महतीः, आशिषः आशीर्वादान्, दास्यामः। विपरीतलक्षणया कञ्चिदहितकारिणं खलं प्रत्युक्तिरियम्। यद्वा—अतिहितकारिणं सुहृदं प्रत्युक्तिरियम्। अनुष्टुप् वृत्तम्॥ ११०॥

अविरतमिति।—अविरतं सततं, परेषां कार्य्यं कुर्व्वन्तीति तेषां, सतां साधूनां, वचः वचनं, मधुरिमाऽतिशयेन अतिमाधुर्य्येण, अमृतं सुधोपममित्यर्थः, अपि च किञ्च, मानसं हृदयम्, अम्बुनिधिः समुद्रः, अतिमहदिति भावः, यशः विमला शारदी शरत्कालीना, पार्वणचन्द्रिका पौर्णमासीचन्द्रकिरणावलीत्यर्थः, भवतीति शेषः। द्रुतविलम्बितं वृत्तं—"द्रुतविलम्बितमाह नभौ भरौ" इति तल्लक्षणात्॥ १११॥

निर्गुण इति।—निर्गुणः गुणहीनः, ना पुरुषः, विपुलो महान्,

पङ्कैर्विना सरो भाति सदः खलजनैर्विना।
कटुवर्णैर्विना काव्यं मानसं विषयैर्विना ॥ ११३ ॥
तत्त्वं किमपि काव्यानां जानाति विरलो भुवि।
मार्मिकः को मरन्दानामन्तरेण मधुव्रतम् ? ॥ ११४ ॥
सरजस्कां पाण्डुवर्णां कण्टकप्रकरान्विताम्।
केतकीं सेवसे हन्त ! कथं रोलम्ब ! निस्त्रप ! ? ॥ ११५ ॥

आडम्बरो यस्य तथाभूतोऽपि, अतिप्रगल्भोऽपीति भावः, आपातरम्याणि दर्शनमात्ररमणीयानि, पुष्पाणि तेषां श्रिया सौन्दर्येण, शोभिता शाल्मलिः तदाख्यवृक्षभेदः, यथा शाल्मलिरिव, नैव शोभते। उपमालङ्कारः। अनुष्टुप् वृत्तम् ॥ ११२ ॥

पङ्कैरिति।—सरः सरोवरं, पङ्कैः विना, सदः सभा, खलजनैः विना, काव्यं कटवर्णैः दुःश्रवैरक्षरैः, विना, तथा मानसं चित्तं, विषयैः स्रक्-चन्दन-वनितादिभिर्भोग्यवस्तुभिः, विना, भाति राजते, पङ्कहीनं सरः, दुर्जनरहितं सदः, दुःश्राव्यवर्णवर्जितं काव्यं विषयानासक्तं तत्त्वावबोधपरं चित्तञ्च राजते इति निष्कर्षः। अनुष्टुप् वृत्तम् ॥ ११३ ॥

तत्त्वमिति।—विरलः अल्पसङ्ख्यः जनः, भुवि पृथिव्यां, काव्यानां कविप्रणीतभणितानां, किमपि अनिर्वचनीयं, तत्त्वं याथार्थ्यं, जानाति; तथा हि, मधुव्रतं भृङ्गम्, अन्तरेण विना, मरन्दानां पुष्पमधूनां, मर्म जानातीति मार्मिकः मार्मज्ञो वेत्ता, कः ? न कोऽपीत्यर्थः। अत्र वाक्ययोर्बिम्बानुबिम्बप्रतीतेर्दृष्टान्तालङ्कारः। अनुष्टुप् वृत्तम् ॥ ११४ ॥

सरजस्कामिति।—निस्त्रप ! रे निर्लज्ज ! रोलम्ब ! भ्रमर ! हन्त ! खेदे, सरजस्कां सपरागाम्, ऋतुमतीञ्च, पाण्डुवर्णां शुभ्रवर्णां, कण्टकप्रकरेण सूचीसमूहेन, अन्विताम् आकीर्णां, रोमाञ्चपुञ्जाञ्च, केतकीं केतककुसुमं, कथं किमर्थं, सेवसे ? भोक्तुं प्रवर्त्तसे ? नैतदुचितं तवेति भावः। अत्राप्रस्तुतेन रोलम्बवृत्तान्तेन कस्यचित् प्रस्तुतस्य ऋतुमतीं स्त्रियमभिगच्छतः प्रतीतेः समासोक्तिरूपाप्रस्तुतप्रशंसा। अनुष्टुप् वृत्तम् ॥ ११५ ॥

यथा तानं विना रागो यथा मानं विना नृपः।
यथा दानं विना हस्ती तथा ज्ञानं विना यतिः॥ ११६॥
सन्तः स्वतः प्रकाशन्ते गुणा न परतो नृणाम्।
आमोदो न हि कस्तूर्याः शपथेन विभाव्यते॥ ११७॥
अपि बत गुरुगर्वं मा स्म कस्तूरि! यासी-
रखिलपरिमलानां मौलिना सौरभेण।
गिरिगहनगुहायां लीनमत्यन्तदीनं
स्वजनकममुनैव प्राणहीनं करोषि॥ ११८॥

यथेति।—तानो नाम इतरस्य स्वरधारणार्थं वीणादिभिः साध्यः स्वरविशेषः तं, विना रागः माधवादिव्यञ्जकस्वरभेदः, यथा, मानं सम्मानं, विना नृपः राजा, यथा, दानं मदस्रवणं, विना हस्ती यथा, तथा ज्ञानं तत्त्वावबोधं, विना यतिः योगी, न शोभते इति शेषः। मालोपमा-ऽलङ्कारः, तदुक्तं दर्पणे—"मालोपमा यदेकस्योपमानं बहु दृश्यते" इति। अनुष्टुप् वृत्तम्॥ ११६॥

सन्त इति।—नृणां मानवानां, सन्तः वर्त्तमानाः, गुणाः स्वतः आत्मनैव, प्रकाशन्ते, परतः न, परमुखेन न प्रकाशन्ते इत्यर्थः, तथा हि, कस्तूर्याः मृगनाभेः, आमोदः सौरभं, शपथेन दिव्यकरणेन, न हि विभाव्यते नैवानुभूयते। दृष्टान्तालङ्कारः, तथा च दर्पणः,—"दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम्" इति। अनुष्टुप् वृत्तम्॥ ११७॥

अपीति।—हे कस्तूरि! अखिलानां समग्राणां, परिमलानां सौरभाणां, मौलिना मूर्द्धन्येनेत्यर्थः, श्रेष्ठेनेति भावः, सौरभेणापि गुरुगर्वं महान्तमहङ्कारं, मा स्म यासीः न गच्छ, नातिमात्रं दर्पं कुर्वित्यर्थः, बत! खेदे, अमुनैव सौरभेण हेतुना, गिरिगहनगुहायां पर्वतीयारण्य-विवरे, लीनं निभृतस्थितम्, अत्यन्तदीनम् अतिभयेन कातरं, स्वजनकं स्वोत्पादकं, प्राणहीनं निहतमित्यर्थः, करोषि, कस्तूरीलोभेन कस्तूरी-मृगं व्याधा यत्नतो निघ्नन्तीति भावः। मालिनी वृत्तं—"ननमयययुतेयं मालिनी भोगिलोकैः" इति लक्षणात्॥ ११८॥

दूरीकरोति कुमतिं विमलीकरोति
चेतश्चिरन्तनमघं चुलुकीकरोति।
भूतेषु किं च करुणां बहुलीकरोति
सङ्गः सतां किमु न मङ्गलमातनोति? ॥ ११९॥

अनवरतपरोपकारव्यग्रीभवदमलचेतसां महताम्।
आपातकाटवानि स्फुरन्ति वचनानि भेषजानीव॥ १२०॥

व्यागुञ्जन्मधुकरपुञ्जमञ्जुगीता-
न्याकर्ण्य श्रुतिमदजाड्ययातिरेकात्।
आभूमीतलनतकन्धराणि मन्ये-
ऽरण्येऽस्मिन्नवनिरुहां कुटुम्बकानि॥ १२१॥

दूरीकरोतीति।—सतां सङ्गः साधुसङ्गमः, उ भोः! किं मङ्गलं न आतनोति? न वितारयति? अपि तु बहु मङ्गलं विस्तारयतीत्यर्थः; तथा हि, कुमतिं दुष्प्रवृत्तिं, दूरीकरोति निरस्यति, चेतः चित्तं, विमलीकरोति निर्मलीकरोति, दोषरहितं करोति इत्यर्थः, चिरन्तनं चिरकालिकम्, अघं पापं, चुलुकीकरोति पिबतीत्यर्थः, नाशयतीति यावत्, किञ्च, भूतेषु प्राणिषु, करुणां कृपां, बहुलीकरोति वितारयति। वसन्ततिलकं वृत्तम्॥ ११९॥

अनवरतेति।—अनवरतं अविरतं, परेषामुपकारे व्यग्रीभवत् अतिशयेन प्रवर्त्तमानम्, अमलं चेतः मानसं येषां तथाभूतानां, महतां जनानाम्, आपाततः श्रवणमात्रेण, काटवं कटुत्वं येषु तथाभूतानि, वचनानि भेषजानीव औषधानीव, स्फुरन्ति विराजन्ते। गीतिश्छन्दः॥ १२०॥

व्यागुञ्जदिति।—अस्मिन् अरण्ये कानने, अवनिरुहां महीरुहां, वृक्षाणामित्यर्थः, कुटुम्बकानि कुलानि, व्यागुञ्जतां विशेषेण समन्तात् गुञ्जनकारिणां, मधुकरपुञ्जानां भृङ्गनिचयानां, मञ्जूनि मनोज्ञानि, गीतानि आकर्ण्य श्रुत्वा, श्रुतौ श्रवणे, यो मदः हर्षातिरेकः, तज्जात् तदुत्पन्नात्, जड्यातिरेकात् द्रवीभावविशेषात् हेतोः, आभूमीतलं भूमीतल-

मृतस्य लिप्सा कृपणस्य दित्सा
विमार्गगायाश्च रुचिः स्वकान्ते ।
सर्पस्य शान्तिः कुटिलस्य मैत्री
विधातृसृष्टौ न हि दृष्टपूर्वा ॥ १२२ ॥

उत्तमानामपि स्त्रीणां विश्वासो नैव विद्यते ।
राजप्रियाः कैरविण्यो रमन्ते मधुपैः सह ॥ १२३ ॥

अयाचितः सुखं दत्ते याचितश्च न यच्छति ।
सर्वस्वञ्चापि हरते विधिरुच्छृङ्खलो नृणाम् ॥ १२४ ॥

पर्य्यन्तं, नताः कन्धरा येषां तथाभूतानि, तिष्ठन्तीति शेषः, मन्ये सम्भावयामि, वाक्यार्थः कर्म । प्रहर्षिणी वृत्तम् ॥ १२१ ॥

मृतस्येति ।—मृतस्य जनस्य, कर्त्तरि षष्ठी ; लिप्सा लाभेच्छा, कर्मणि षष्ठीति नैव समीचीनं प्रतिभाति, मृतस्य प्राप्तौ इच्छायाः अन्येषामेव सत्त्वात् ; कृपणस्य व्ययकुण्ठस्य, दित्सा दानेच्छा, विमार्गगायाः दुश्चारिण्याः स्त्रियाः, स्वकान्ते रुचिः अनुरागः, सर्पस्य भुजगस्य, शान्तिः शमपरायणता, तथा कुटिलस्य दुर्जनस्य, मैत्री सौहृदं, विधातुः ब्रह्मणः, सृष्टौ नहि नैव, दृष्टपूर्वा न कदाचिदपि पूर्वं दृष्टेत्यर्थः । उपजाति वृत्तम् ॥ १२२ ॥

उत्तमानामिति ।—उत्तमानामपि उत्कृष्टवर्णानामपि, यद्वा—महतामपि, स्त्रीणां विश्वासः नैव विद्यते नैवास्ति, तथा हि, राजप्रियाः राजा चन्द्रः, तस्य प्रियाः कैरविण्यः कुमुदिन्यः, मधुपैः भृङ्गैः सह, रमन्ते क्रीडन्ति । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः । अनुष्टुप् वृत्तम् ॥ १२३ ॥

अयाचित इति ।—विधिर्दैवम्, अयाचितः अप्रार्थितः सन्नपि, सुखं दत्ते, याचितश्च प्रार्थितश्च सुखं न यच्छति न ददाति, तथा उच्छृङ्खलः प्रतिकूलः सन्, नृणां मानवानां, सर्वस्वञ्चापि सर्वस्वमेव, हरते नाशयति । अनुष्टुप् वृत्तम् ॥ १२४ ॥

दोर्दण्डद्वयकुण्डलीकृतलसत्कोदण्डचण्डाशुग-
ध्वस्तोद्दण्डविपक्षमण्डलमथ त्वां वीक्ष्य मध्ये-रणम् ।
वल्गद्गाण्डिवमुक्तकाण्डवलयज्वालावलीताण्डव-
भ्रश्यत्खाण्डवरुष्टपाण्डवमहो ! को न क्षितीशः स्मरेत् ?॥१२५॥

खण्डितानेत्र(क ?)कञ्जालिमञ्जुरञ्जनपण्डिताः ।
मण्डिताखिलदिक्प्रान्ताश्चण्डांशोः पान्तु भानवः ॥१२६॥

इति श्रीमत्पण्डितराजजगन्नाथकविविरचिते भामिनी-
विलासे प्रास्ताविको नाम प्रथमो विलासः ।

---

दोर्दण्डेति ।—अथेदानीं रणस्य मध्ये मध्ये-रणं, दोर्दण्डद्वयेन बाहुदण्ड-युगलेन, कुण्डलीकृतं मण्डलीकृतं, लसत् दीप्यमानं, यत् कोदण्डं धनुः, तत्र ये चण्डाः दारुणाः, आशु गच्छन्तीति आशुगाः शराः, तैः ध्वस्तानि निहतानि, उद्दण्डानि प्रचण्डानि, विपक्षाणां शत्रूणां, मण्डलानि येन तं, त्वां वीक्ष्य दृष्ट्वा, कः क्षितीशः राजा, वल्गतां चलतां, गाण्डिवमुक्तानां गाण्डिवाख्यधनुर्मुक्तानां, काण्डानां शराणां, वलयस्य मण्डलस्य, ज्वालावली किरणसमूहः, तस्य ताण्डवेन नर्त्तनेन, भ्रश्यत् विनश्यत्, यत् खाण्डवं तदाख्यं वनं, तस्मिन् रुष्टः कुपितः, पाण्डवः अर्जुनः तं, न स्मरेत् ? अपि तु स्मरेदेवेत्यर्थः, अहो ! आश्चर्य्यम् । अत्र स्मरणालङ्कारः, तथा चाह दर्पणे—"सदृशानुभवात् वस्तु-स्मृतिः स्मरणमुच्यते" इति । शार्दूलविक्रीडितं वृत्तम् ॥ १२५ ॥

खण्डितेति —खण्डिताः विदलिताः, विकासं गता इत्यर्थः, नेत्राण्येव ( अनेकाः ? ) कञ्जालयः कमलश्रेणयः, तासां मञ्जुरञ्जने मधुरविकाशने, पण्डिताः दक्षाः, तथा मण्डिताः शोभिताः, अखिलाः समग्राः, दिशां प्रान्ताः अन्तभागाः यैः तथाभूताः, चण्डांशोः सूर्य्यस्य, भानवः किरणाः, पान्तु सर्वानस्मान् रक्षन्तु । अनुष्टुप् वृत्तम् ॥ १२६ ॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्यविरचिता भामिनीविलासस्य
प्रथमविलासव्याख्या समाप्ता ।

# द्वितीयविलासः ।

न मनागपि राहुरोधशङ्का
न कलङ्कानुगमो न पाण्डुभावः ।
उपचीयत एव काऽपि शोभा
परितो भामिनि ! ते मुखस्य नित्यम् ॥ १ ॥

नितरां परुषा सरोजमाला
न मृणालानि विचारपेशलानि ।
यदि कोमलता तवाङ्गकाना-
मथ का नाम कथाऽपि पल्लवानाम् ? ॥ २ ॥

स्वेदाम्बुसान्द्रकणशालिकपोलपाली-
दोलायितश्रवणकुण्डलवन्दनीया ।

नेति ।—भामिनि ! हे कान्ते ! तव मुखस्य वदनस्य, परितः समन्ततः, नित्यं सततं, काऽपि शोभा उपचीयते एव वर्द्धते एव, मनागपि ईषदपि, राहुरोधशङ्का राहुग्राससम्भावना, न, यतः कलङ्कस्य अनुगमः संयोगः, न, पाण्डुभावः नितरां श्वेतत्वञ्च, न, अस्तीति सर्वत्र शेषः, राहुः सकलङ्कं शुभ्रकान्तिमेव चन्द्रं ग्रसति, तव मुखन्तु गौरमेव, न कलङ्काङ्कितं, नापि पाण्डु इति भावः । मालभारिणी वृत्तम् ॥ १ ॥

नितरामिति ।—हे भामिनि ! यदि तव अङ्गकानाम् अवयवानां, कोमलता मार्दवं, विद्यते इति शेषः, तदा सरोजमाला कमलराजिः, नितराम् अतिशयेन, परुषाः कर्कशाः, मृणालानि विचारेण पेशलानि कोमलानि, न, अथेदानीं, पल्लवानां नवकिसलयानां, कथाऽपि प्रसङ्गोऽपि, का नाम ? न काऽपीत्यर्थः, सरोज मृणाल नवपल्लवेभ्योऽपि तवाङ्गं सुकोमलमिति भावः । मालभारिणी वृत्तम् ॥ २ ॥

आनन्दमङ्कुरयति स्मरणेन कापि
रम्या दशा मनसि मे मदिरेक्षणायाः॥ ३॥
कस्तूरिकातिलकमालि! विधाय सायं
स्मेरानना सपदि शीलय सौधमौलिम्।
प्रौढिं भजन्तु कुमुदानि मुदामुदारा-
मुल्लासयन्तु परितो हरितो मुखानि॥ ४॥
तस्याः सुमन्दहसितं स्मितानि तानि
सा वै कलङ्करहिता मधुराननश्रीः।
अद्यापि मे हृदयमुन्मदयन्ति हन्त!
सायन्तनाम्बुजसहोदरलोचनायाः॥ ५॥

स्वेदेति।—स्वेदाम्बूनां घर्मजलानां, सान्द्रैः घनैः, कणैः बिन्दुभिः, सुरतकालिकैः इति भावः, शालते शोभते इति तच्छालिनी, या कपोलपाली गण्डदेशः, तत्र दोलायितेन आन्दोलितेन, श्रवणकुण्डलेन कर्णकुण्डलेन, वन्दनीया शोभनीया, मदिरेक्षणायाः मत्तखञ्जननयनायाः, यद्वा—मादयति आभ्यामिति मदिरे मोहकारिणी इत्यर्थः, ईक्षणे नयने यस्यास्तथाभूतायाः, प्रियाया इति शेषः, रम्या मनोहारिणी, कापि अनिर्वचनीया, दशा अवस्था, स्मरणेन मे मम, मनसि आनन्दम् अङ्कुरयति उद्रिक्तं करोतीत्यर्थः। वसन्ततिलकं वृत्तम्॥ ३॥

कस्तूरिकेति।—आलि! हे सखि! "आली सखी वयस्या च" इत्यमरः; कस्तूरिकायाः तिलकं विधाय कृत्वा, सायं सन्ध्यायां, स्मेरम् आननं यस्याः तथाभूता मन्दहासिनी सतीत्यर्थः, सपदि झटिति, सौधमौलिं हर्म्यशिखरं, शीलय शोभय; किं ततः? इत्याह—प्रौढिमिति, कुमुदानि मुदां प्रमोदानां, हर्षस्य विकाशानामिति यावत्, उदारां महतीं, प्रौढिं सामर्थ्यं, विकाशसामर्थ्यमित्यर्थः, भजन्तु प्राप्नुवन्तु, तथा परितः समन्तात्, हरितो मुखानि दिङ्मुखानि, उल्लासयन्तु आलोकमयानि कुर्वन्तु इत्यर्थः। एतेन नायिकामुखं चन्द्र इवेत्युपमा व्यज्यते। वसन्ततिलकं वृत्तम्॥ ४॥

तदिति।—सायन्तनं सन्ध्याकालीनं, यत् अम्बुजं पद्मं, मुकुलितप्राय-

प्रातस्तरां प्रणमने विहिते गुरूणा-
माकर्ण्य वाचममलां भव पुत्रिणीति ।
नेदीयसि प्रियतमे परमप्रमोद-
पूर्णादरं दयितया दधिरे दृगन्ताः ॥ ६ ॥

गुरुजनभयमद्विलोकनान्तः समुदयदाकुलभावमावहन्त्याः ।
दरदलदरविन्दसुन्दरं हा ! हरिणदृशो नयनं न विस्मरामि ॥ ७ ॥

बदरामलकाम्रदाडिमानामपहृत्य श्रियमुन्नतौ क्रमेण ।
अधुना हरणे कुचौ यतेते दयिते ! ते करिशावकुम्भलक्ष्म्याः ॥ ८ ॥

मिति भावः, तल्लहोदरं तत्सदृशं, लोचनं नयनं यस्याः तथाभूतायाः, भावि मद्विरहशङ्कया निमीलितनेत्राया इति भावः, तत् प्रागनुभूतमिति भावः, मञ्जु मनोज्ञं, मन्दहसितम् ईषत्स्मितं, तानि श्वसितानि निश्वासाः, दौर्मनस्यजनिता इति भावः, सा वै सा एव, कलङ्करहिता निष्कलङ्का, मधुरा मनोहारिणी, आननश्रीः वदनकान्तिः, अद्यापि मे मम, हृदयम् उन्मादयन्ति उन्मत्तं कुर्वन्ति, हन्तेति खेदे । सखायं प्रति प्रोषितस्योक्तिरियम् । वसन्ततिलकं वृत्तम् ॥ ५ ॥

प्रातरिति ।—प्रातस्तराम् अतिप्रभाते, गुरूणां पित्रादीनां श्वशुरादीनां वा, प्रणमने अभिवन्दने, विहिते सति, त्वं पुत्रिणी पुत्रवती, भवेति अमलां विशुद्धां, वाचम् आशीर्वचनं, तेषामिति शेषः, आकर्ण्य श्रुत्वा, दयितया कान्तया, प्रियतमे पत्यौ, मयीति शेषः, नेदीयसि निकटवर्त्तिनि सति, परमेण प्रमोदेन आनन्देन, पूर्णः आदरः यस्मिन् तत् यथा तथा, दृगन्ताः कटाक्षाः, दधिरे निहिताः । वसन्ततिलकं वृत्तम् ॥ ६ ॥

गुर्विति ।—हा ! इति खेदे, गुरुजनाश्रयेण हेतुना मद्विलोकनान्तः मां प्रति अवलोकनान्तः, समुदयन् समुत्पद्यमानः, यः आकुलभावः कातरभावः तम्, उद्वहन्त्याः दधत्याः, हरिणदृशः मृगाक्ष्याः, प्रियाया इति शेषः, दलत् विकसत्, यदरविन्दं कमलं, तद्वत् सुन्दरं चारुणी, नयनं न विस्मरामि । सखायं प्रति प्रोषितस्योक्तिः । पुष्पिताग्रा वृत्तम् ॥ ७ ॥

बदरेति ।—दयिते ! हे प्रिये ! ते तव, उन्नतौ कुचौ स्तनौ, क्रमेण

कपोलपालीं तव तन्वि ! मन्ये
लावण्यधन्ये ! दिशमुत्तराख्याम्।
आभाति यस्यां ललितालकायां
मनोहरा वैश्रवणस्य लक्ष्मीः ॥ ९ ॥

नीवीं नियम्य शिथिलामुषसि प्रकाश-
मालोक्य वारिजदृशः शयनं जिहासोः।
नैवापरोहति कदापि च मानसान्मे
नाभेः प्रभा सरसिजोदरसोदरायाः ॥ १० ॥

बदरामलकाम्रदाड़िमानां प्रथमं बदरस्य बदरीफलस्य, "कुल" इति प्रसिद्धस्य, ततः आमलकस्य आमलकीफलस्य, ततः आम्रस्य चूतफलस्य, अनन्तरं दाड़िमस्य दाड़िमीफलस्येत्यर्थः, श्रियं शोभाम्, अपहृत्य चोरयित्वा, अधुना साम्प्रतं, करिशावस्य करभकस्य, कुम्भयोः लक्ष्म्याः श्रियाः, हरणे यतेते उद्यच्छतः, क्रमेणातिप्रवृद्धं तव स्तनद्वयं राजते इति भावः। मालभारिणी वृत्तम् ॥ ८॥

कपोलेति।—तन्वि ! हे कृशाङ्गि ! लावण्यं "मुक्ताफलेषु छाया-यास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ॥" इत्युक्त-लक्षणः कान्तिविशेषः, तेन धन्या प्रशस्या लावण्यधन्या तत्सम्बुद्धौ लावण्यधन्ये ! हे लावण्यपूर्णे ! इत्यर्थः, तव कपोलपालीं गण्डदेशम्, उत्तराख्याम् उदीचीं, दिशं मन्ये सम्भावयामि, कुतः ? ललिताः मनोहराः, अलकाः चूर्णकुन्तलाः, अलका कुवेरनगरी च यस्यां तथोक्तायां, यस्यां कपोलपाल्यां, मनोहरा वै अतिमनोज्ञा एव, श्रवणस्य कर्णस्य, अथच मनोहरा वैश्रवणस्य धनपतेः कुवेरस्य, लक्ष्मीः श्रीः, आभाति राजते। अत्र सभङ्गश्लेषः। उपजाति वृत्तम् ॥ ९॥

नीवीमिति।—उषसि प्रभाते, प्रकाशम् आतपं, सूर्य्यस्य प्रथमावि-र्भावजनितमालोकमित्यर्थः, आलोक्य शिथिलां स्खलितां, नीवीं वसनग्रन्थिं, नियम्य संयम्य, शयनं शय्यां, जिहासोः त्यक्तु-मिच्छोः उत्थातुमिच्छोरित्यर्थः, वारिजदृशः पङ्कजनेत्रायाः, सरसिजोदरं

मुधैव नक्तं परिकल्प्य गन्तुं मृषैव रोषादुपजल्पतो मे ।
उदश्रुचञ्चन्नयना नताङ्गी गिरं न कां कामुररीचकार ? ॥ ११ ॥
तदवधि कुशली पुराणशास्त्रस्मृतिशतचारुविचारजो विवेकः ।
यदवधि न पदं दधाति चित्ते हरिणकिशोरदृशोर्विलासः ॥ १२ ॥
आगतः पतिरितीरितं जनैः शृण्वती चकितमेत्य देहलीम् ।
कौमुदीव शिशिरीकरिष्यते लोचने मम कदा मृगेक्षणा ? ॥ १३ ॥

कमलोदरं, तस्योदरायाः तत्तुल्यायाः, गभीराया इति भावः, नाभेः प्रभा सौन्दर्यं, मे मम, मानसात् कदाऽपि च नैव अवरोहति नैवापसरतीत्यर्थः, तन्नाभिप्रभा मम मनसि लग्नैवास्ति, न कथमपि विस्मर्यते इति भावः । सखायं प्रत्युक्तिः । वसन्ततिलकं वृत्तम् ॥ १० ॥

मुधेति ।—नक्तं रात्रौ, मुधैव मृषैव, गन्तुं परिकल्प्य गच्छामीति मृषैवोक्त्वेति भावः, रोषात् कोपात्, मृषैव उपजल्पतः कृतककोपमुद्भाव्य किमपि जल्पत इत्यर्थः,मे मम, समीपे इति शेषः, नताङ्गी यौवनभरेणावनतकलेवरा, प्रियेति शेषः, उदश्रु उद्गतनेत्रजलं यथा तथा, चञ्चती चलती, नयने यस्याः तथाभूता सती, कां कां गिरं वाचं, दीनामिति भावः, न उररीचकार न स्वीचकार, नोवाच इत्यर्थः, अपि तु नितरां करुणां वाचमेव बहुलामुदैरयदिति भावः । उपेन्द्रवज्रा वृत्तं—"स्यादिन्द्रवज्रा यदि तौ जगौ गः" इति "उपेन्द्रवज्रा प्रथमे लघौ सा" इति तल्लक्षणात् ॥ ११ ॥

तदिति ।—यदवधि हरिणकिशोरदृशो हरिणशावकनयनायाः, प्रियाया इत्यर्थः, विलासः विभ्रमः, चित्ते मनसि, पदं न दधाति, तदवधि पुराणशास्त्राणां स्मृतीनां संहितानाञ्च शतानि तेषां चारुः सुन्दरः, विचारः तस्मात् जायते इति तथाभूतः, विवेकः ज्ञानं, कुशली समर्थ इत्यर्थः । पुष्पिताग्रा वृत्तम् ॥ १२ ॥

आगत इति ।—मृगेक्षणा मृगनयना प्रिया, पतिः आगतः इति जनैः ईरितम् उक्तं, शृण्वती आकर्णयन्ती सती, चकितं यथा तथा देहलीं द्वारदेशम्, एत्य आगत्य, कौमुदीव चन्द्रिकेव, मम लोचने नयने, कदा शिशिरीकरिष्यते ? शीतलयिष्यति ? आनन्दयिष्यति ? इत्यर्थः । इन्द्रवज्रा वृत्तम् ॥ १३ ॥

अवधौ दिवसावसानकाले भवनद्वारि विलोचने दधाना ।
अवलोक्य समागतं तदा मामथ रामा विकसन्मुखी बभूव ॥१४॥

वक्षोजाग्रं पाणिनाऽऽमृश्य दूरं
यातस्य द्रागाननाब्जं प्रियस्य ।
शोणाग्राभ्यां भामिनी लोचनाभ्यां
जोषं जोषं जोषमेवावतस्थे ॥ १५ ॥

गुरुभिः परिवेष्टिताऽपि गण्डस्थलकण्डूयनचारुकैतवेन ।
दरदर्शितहेमबाहुनाला मयि बाला नयनाञ्चलं चकार ॥१६॥

गुरुमध्यगता मया नताङ्गी
निहता नीरजकोरकेण मन्दम् ।

अवधाविति ।—दिवसावसानकाले सायङ्काले, अवधौ रामा प्रिया, भवनद्वारि गृहदेहल्यां, विलोचने नयने, दधाना निदधती सती, तदा समागतं समुपस्थितं, माम् अवलोक्य अथावलोकनानन्तरं, विकसन्मुखी प्रफुल्लमुखी, बभूव । मालभारिणी वृत्तं—"विषमे ससजा यदा गुरू चेत् सभरा येन तु मालभारिणीयम्" इति तल्लक्षणात् ॥ १४ ॥

वक्षोजाग्रमिति ।—भामिनी कान्ता, पाणिना करेण, वक्षोजाग्रं स्तनाग्रम्, आमृश्य विमर्द्य, द्राक् झटिति, दूरं यातस्य प्रयातुमुद्यतस्येति यावत्, प्रियस्य कान्तस्य, आननाब्जं मुखपद्मं, शोणाग्राभ्यां रक्तापाङ्गाभ्यां, लोचनाभ्यां जोषं जोषं मन्दं मन्दमित्यर्थः, आमृश्य स्पृष्ट्वा, आमृश्य इत्युभयत्रान्वेति; जोषमेव तूष्णीमेव, अवतस्थे स्थिता । शालिनी वृत्तं —"मात्तौ गौ चेच्छालिनी वेदलोकैः" इति तल्लक्षणात् ॥ १५ ॥

गुरुभिरिति ।—गुरुभिः श्वश्रूजनादिभिः, परिवेष्टिताऽपि परिवृताऽपि, बाला मुग्धा प्रिया, गण्डस्थलस्य कपोलदेशस्य, कण्डूयनमेव चारु मनोज्ञं, कैतवं व्याजः तेन, दरम् ईषत्, दर्शितं हेमबाहुनालं सुवर्णभुजमृणालं यया तथाभूता सती, मयि नयनाञ्चलं कटाक्षमित्यर्थः, चकार । मालभारिणी वृत्तम् ॥ १६ ॥

गुर्विति ।—गुरूणां श्वश्र्वादीनां, मध्यगताऽपि नताङ्गी, यौवनभरेणेति

दरकुण्डलताण्डवं नतभ्रू-
लतिकं मामवलोक्य घूर्णिताऽऽसीत् ॥ १७ ॥
विनये नयनारुणप्रसारः
प्रणती हन्त ! निरन्तराश्रुधाराः ।
अपि जीवितसंशयः प्रयाणे
न हि जाने हरिणाक्षि ! केन तुष्येः ? ॥ १८ ॥
अकरुण ! मृषा वाचं ब्रूषे विमुञ्च ममाञ्चलं
तव परिचितः स्नेहः सम्यङ्मयीत्यभिधायिनीम् ।
अविरलगलद्बाष्पां तन्वीं निरस्तविभूषणां
क इव भवतीं भद्रे ! निद्रे ! विना विनिवेदयेत् ? ॥ १९ ॥

भावः, प्रियेति शेषः, मया नीरजकोरकेण कमलमुकुलेन, मन्दं यथा तथा निहता ताडिता सती, दरं मन्दं, कुण्डलयोस्ताण्डवं नर्त्तनं यस्मिन् तत् यथा तथा, नते भ्रुवौ लतिके इव यस्मिन् तत् यथा तथा, माम् अवलोक्य दृष्ट्वा, घूर्णिता परावर्त्तितमुखी इत्यर्थः, आसीत् । मालभारिणी वृत्तम् ॥ १७ ॥

विनये इति ।—हरिणाक्षि ! हे मृगनयने ! विनये दीनोक्तौ, ममेति शेषः, नयनयोः अरुणप्रसारः रक्तसञ्चारः, रक्तनेत्रत्वमित्यर्थः, तवेति सर्वत्र शेषः, प्रणतौ चरणनिपतने, निरन्तरा अविच्छिन्नाः, अश्रुधाराः नयनजलानि, हन्त ! खेदे, प्रयाणे प्रस्थाने, जीवितस्य प्राणनस्य, संशयः अपि सन्देहश्च, यद्यहं प्रतिष्ठेय तदा तव जीवनं स्थास्यति न वेति भावः, अतः केन, कार्य्येणेति शेषः, तुष्येः सन्तोषं गच्छेः, तत् न हि जाने नैव जानामीत्यर्थः । मालभारिणी वृत्तम् ॥ १८ ॥

अकरुणेति ।—भद्रे ! हे साधुशीले ! निद्रे ! भवतीं त्वां, विना क इव, अकरुण ! हे निष्कृप ! मृषा अलीकां, वाचं, मत्प्रीतिकरोमिति भावः, ब्रूषे वदसि, मम अञ्चलं विमुञ्च परित्यज, मया तव स्नेहः प्रणयः, मयीति शेषः, सम्यक् यथा तथा परिचितः विदितः, इत्यभिधायिनीम् एवं कथयन्तीम्, अविरलम् अविच्छिन्नं यथा तथा, गलन्ति स्रवन्ति, बाष्पाणि

तीरे तरुण्या वदनं सहासं नीरे सरोजञ्च मिलद्विकासम् ।
आलोक्य धावत्युभयत्र मुग्धा मरन्दलुब्धाऽलिकिशोरमाला ॥ २० ॥
वीक्ष्य वक्षसि विपक्षकामिनीहारलक्ष्म दयितस्य भामिनी ।
अंसदेशविनिवेशितां क्षणादाचकर्ष निजबाहुवल्लरीम् ॥ २१ ॥
दरानमत्कन्धरबन्धमीषन्निमीलितस्निग्धविलोचनाब्जम् ।
अनल्पनिश्वासभरालसाङ्गं स्मरामि सङ्गं चिरमङ्गनायाः ॥ २२ ॥

यस्याः तथाभूतां, ललितानि रम्याणि, विभूषणानि अलङ्काराः यया तादृशीं, तन्वीं कृशाङ्गीं, प्रियामिति शेषः, विनिवेदयेत् ? विशेषेण ज्ञापयेत् ? प्रदर्शयेत् ? इति यावत्, न कोऽपि विनिवेदयेदिति भावः । स्वप्नानुभूतप्रियाया वृत्तान्तस्य सखायं प्रत्युक्तिरियम् । हरिणीवृत्तं— "नसमरसला गः षड् वेदैर्हयैर्हरिणी मता" इति तल्लक्षणात् ॥ १८ ॥

तीरे इति ।—तीरे तटे, तरुण्याः युवत्याः, सहासं सस्मितं, वदनं, तथा नीरे जले, मिलद्विकासं विकस्वरमित्यर्थः, सरोजं कमलञ्च, आलोक्य दृष्ट्वा, मुग्धा अविशेषज्ञा, मरन्दलुब्धा मधुलोलुपा, अलिकिशोरमाला भृङ्गशावकराजिः, उभयत्र वदने सरोजे चेत्यर्थः, धावति अभिगच्छति । अत्र भ्रान्तिमानलङ्कारः, तथा च दर्पणः,—"साम्यादतस्मिंस्तद्बुद्धिर्भ्रान्तिमान् प्रतिभोत्थिता" इति । उपजातिं वृत्तम् ॥ २० ॥

वीक्ष्येति ।—भामिनी कान्ता, दयितस्य प्रियस्य, वक्षसि विपक्षकामिन्याः सपत्न्या इत्यर्थः, हारलक्ष्म गाढालिङ्गनजनितं हारचिह्नमित्यर्थः, वीक्ष्य दृष्ट्वा, क्षणात् सहसा, अंसदेशे स्कन्धदेशे, प्रियस्येति शेषः, विनिवेशितां स्थापितां, निजबाहुवल्लरीं स्वभुजमञ्जरीम्, आचकर्ष आकृष्टवतीत्यर्थः, सापत्न्यद्वेषादिति भावः । इन्द्रवज्रा वृत्तम् ॥ २१ ॥

दरेति ।—दरम् ईषत्, आनमन् नतिं गच्छन्, कन्धरबन्धः ग्रीवाबन्धः यस्मिन् तं, निमीलिते स्निग्धे विलोचने नयने, अब्जे इव कमले इव यस्मिन् तथोक्तं, तथा अनल्पेन आयतेनेत्यर्थः, निश्वासभरेण अलसानि मन्थराणि, अङ्गानि यस्मिन् तथाभूतम्, अङ्गनायाः प्रियायाः, सङ्गं सुरतसमागममित्यर्थः, चिरं स्मरामि । उपेन्द्रवज्रा वृत्तम् ॥ २२ ॥

रोषावेशान्निर्गतं यामयुग्मा-
देत्य द्वारं काश्चिदाख्यां गृणन्तम् ।
मामाघ्रात्वैवाययौ कातराक्षी
मन्दं मन्दं मन्दिरादिन्दिरेव ॥ २३ ॥

हृदये कृतशैवलानुषङ्गा मुहुरङ्गानि यतस्ततः क्षिपन्ती ।
प्रियनामपरे मुखे सखीनामतिदीनामियमादधाति दृष्टिम् ॥२४॥

इत एव निजालयं गताया:
वनिताया गुरुभि: समाहुताया: ।
परिवर्त्तितकन्धरं नतभ्रु
स्मयमानं वदनाम्बुजं स्मरामि ॥ २५ ॥

---

रोषावेशादिति ।—रोषावेशात् कोपवशात्, निर्गतं प्रस्थितं, ततः यामयुग्मात् प्रहरद्वयात्, अनन्तरमिति शेषः, द्वारम् एत्य आगत्य, काञ्चित् आख्यां नामधेयं, प्रियाया इति शेषः, गृणन्तम् उच्चरन्तं, नामोच्चारणेन प्रियामाह्वयन्तमिति यावत्, माम् आघ्रात्वैव सम्यक् ज्ञात्वैव, कातराक्षी कोपकालुष्यात् दीननयना प्रिया, इन्दिरेव लक्ष्मीरिव, मन्दिरात् गृहात्, मन्दं मन्दम् आययौ आगतवती, मत्समीपमिति शेषः । शालिनी वृत्तम् ॥ २२ ॥

हृदये इति ।—इयं कामिनी, हृदये वक्षसि, कृतः धृत इति यावत्, शैवलानाम् अनुषङ्गः प्रलेप इति यावत् यया तथोक्ता, विरह-सन्तापनिवृत्तये इति भावः, मुहुः पुनः पुनः, यतस्ततः अङ्गानि क्षिपन्ती सती प्रियनामपरे प्रियस्य नामकारिणीत्यर्थः, सखीनां मुखे अतिदीनाम् अतिकातरां, दृष्टिम् आदधाति अर्पयति ॥ २४ ॥

इत इति ।—इत एव अस्मत्सकाशादेवेत्यर्थः, निजालयं पित्रालय-मिति भावः, गतायाः प्रस्थितायाः, गुरुभिः पित्रादिभिः, समाहुतायाः, वनितायाः कान्तायाः, परिवर्त्तिता परावर्त्तिता, कन्धरा ग्रीवा यस्मिन् तथोक्तं, नते भ्रुवौ यस्मिन् तादृशं, स्मयमानं मन्दं हसत्, वदन-मेव अम्बुजं पद्मं, स्मरामि । उपेन्द्रवज्रा वृत्तम् ॥ २५ ॥

कथय कथमिवाशा जायतां जीविते मे
मलयभुजगवान्ता वान्ति वाताः कृतान्ताः ।
अयमपि खलु गुञ्जन् मञ्जु माकन्दमौलौ
चुलुकयति मदीयां चेतनां चञ्चरीकः ॥ २६ ॥
निरुध्य यान्तीं तरसा कपोतीं कूजत्कपोतस्य पुरो दधाने ।
मयि स्मितार्द्रं वदनारविन्दं सा मन्दमन्दं नमयाम्बभूव ॥ २७ ॥
तिमिरं हरन्ति हरितां पुरःस्थिताः
तिरयन्ति तापमथ तापशालिनाम् ।
वदनत्विषस्तव चकोरलोचने !
परिमुद्रयन्ति सरसीरुहश्रियः ॥ २८ ॥

कथयेति ।—मलयभुजगवान्ताः मलयाद्रिजातचन्दनतरुवर्त्तिभिर्भुजगैः सर्पैः, वान्ताः निर्गीर्णाः, सविषा इति भावः, अत एव कृतान्ताः यम-सदृशा इति यावत्, वाताः मारुताः, वान्ति वहन्ति, अयमपि चञ्च-रीकः भ्रमरः, माकन्दमौलौ चूततरुशिखरे, मञ्जु मनोहरं, गुञ्जन् जल्पन्, मदीयां मत्सम्बन्धिनीं, चेतनां चुलुकयति खलु गण्डूषेण पिबतीवेत्यर्थः, हरतीति यावत्, अतः मे मम, जीविते आशा कथमिव जायताम् ? भवतु ? कथय, नास्ति मे जीवनाशेति भावः । विरहिण उक्तिरियम् । मालिनी वृत्तं—"ननमयययुतेयं मालिनी भोगिलोकैः" इति लक्षणात् ॥ २६ ॥

निरुध्येति ।—कूजत्कपोतस्य कूजतः रमणार्थं कूजनं कुर्वत इत्यर्थः, कपोतस्य पारावतस्य, पुरः अग्रतः, तरसा वेगेन, यान्तीं गच्छन्तीं, कपोतीं निरुध्य अवरुध्य, स्मितेन मृदुहसितेन, आर्द्रं वदनार-विन्दं मुखचन्द्रं, प्रियाया इति भावः, मयि दधाने धारयति सति, सा मन्दमन्दं मृदुमधुरं यथा तथा, नमयाञ्चकार । उपजातिवृत्तम् ॥ २७ ॥

तिमिरमिति ।—चकोरलोचने ! हे चकोराक्षि ! तव वदनत्विषः मुखकान्तयः, हरितां दिशां, "दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः" इत्यमरः; तिमिरम् अन्धकारं, हरन्ति नाशयन्ति, पुरः अग्रतः, स्थिताः

कुचकलशयुगान्तर्मामकीनं नखाङ्कं
सपुलकतनु मन्दं मन्दमालोकमाना ।
विनिहितवदनं मां वीक्ष्य बाला गवाक्षे
चकिततनु नताङ्गी सद्म सद्यो विवेश ॥ २९ ॥

विधाय सा मद्वदनानुकूलं कपोलमूलं हृदये शयाना ।
तन्वी तदानीमतुलां बलारेः साम्राज्यलक्ष्मीमधरीचकार ॥३०॥

मुहुरर्थितयाऽद्य निद्रया मे
बत ! यामे चरमे निवेदितायाः ।
चिबुकं सुदृशो स्पृशामि याव-
न्मयि तावन्मिहिरोऽपि निर्दयोऽभूत् ॥ ३१ ॥

---

सत्यः तापशालिनां वियोगदुःखवताम्, अस्माकमिति भावः, तापं स्थिरयन्ति शमयन्तीत्यर्थं, तथा सरसीरुहः पद्मस्य, श्रियः शोभाः, परिमुद्रयन्ति निमीलयन्तीत्यर्थः । प्रबोधिता वृत्तं—"सजसा जगौ च भवति प्रबोधिता" इति तल्लक्षणात् ॥ २८ ॥

कुचेति ।—बाला मुग्धा प्रिया, कुचकलशयोः कुचकुम्भयोः, युगस्य अन्तर्मध्ये, मम इदं मामकीनं मत्सम्बन्धीत्यर्थः, नखाङ्कं नखक्षतचिह्नं, सपुलकतनु रोमाञ्चितकलेवरं यथा तथा, मन्दं मन्दम् अल्पमल्पम्, आलोकमाना पश्यन्ती, गवाक्षे विनिहितवदनं स्थापितमुखं, मां वीक्ष्य दृष्ट्वा, चकिता तनुर्यस्मिन् कर्मणि तत् यथा तथा, नताङ्गी सती सद्यः तत्क्षणं, सद्म गृहं, विवेश प्रविष्टवती । मालिनी वृत्तम् ॥ २९ ॥

विधायेति ।—सा तन्वी कृशाङ्गी, हृदये वक्षसि, ममेति शेषः, शयाना सती कपोलमूलं गण्डस्थलमूलं, मम वदनस्य अनुकूलं विधाय वदनोपरि यथायथं विन्यस्येति भावः, तदानीं बलारेः इन्द्रस्य, "बलारातिः शचीपतिः" इत्यमरः ; साम्राज्यलक्ष्मीं त्रिभुवनाधिपत्यश्रियम्, अधरीचकार अधः कृतवती, तदानीमहमिन्द्रादपि अधिकैश्वर्यवन्तमात्मानममन्ये इति भावः । उपजातिवृत्तम् ॥ ३० ॥

मुहुरिति ।—अद्य मे मयीत्यर्थः, मुहुः पुनः पुनः, अर्थितया प्रार्थितया, निद्रया कर्त्र्या, चरमे पश्चिमे, यामे प्रहरे, निवेदितायाः प्रबोधि-

श्रुतिशतमपि भूयः शीलितं भारतं वा
विरचयति तथा नो हन्त! सन्तापशान्तिम्।
अयि! सपदि यथाऽयं केलिविश्रान्तकान्ता-
वदनकमलनालात् कान्तिसान्द्रो नकारः॥ ३२॥
लवलीं तव लीलया कपोले कवलीकुर्वति कोमलत्विषा।
परिपाण्डुरपुण्डरीकषण्डे परिपेतुः परितो महाऽऽधयः॥ ३३॥

तायाः, सुदृशः कान्तायाः, चिबुकं यावत् स्पृशामि स्पृशामि, बत खेदे, तावत् निष्ठुरः सूर्य्योऽपि, मयि निर्दयः अभूत्, अतिनिद्रार्त्ततया पूर्वप्रहरत्रयं कान्तया सह न कोऽपि समासङ्गः कृतः, पश्चात् चरमे प्रहरे कथञ्चित् प्रबोधितायाः प्रियायाश्चिबुकस्पर्शमात्रं कुर्वत्येव मयि सूर्य्यः समुदियायेति विषादमनुभवामीति भावः। सखायं प्रति कस्यचिदुक्तिः। मालभारिणी वृत्तम्॥ ३१॥

श्रुतीति।—हन्त! खेदे हर्षे वा, भूयः पुनः पुनरपि, शीलितं पर्य्यालोचितं, श्रुतिशतं वेदशतं, भारतं भारतीयवृत्तान्तो वा, तथा सन्तापशान्तिं सन्तापशमनं, नो विरचयति न करोति, अयीति कोमलामन्त्रणे, हे सखे! यथा अयं केलौ सुरतविहारे, विश्रान्तायाः विशेषेण श्रान्तायाः इत्यर्थः, वदनमेव कमलं तस्य नालात् कण्ठादिति भावः, कान्तिसान्द्रः कान्तिपूर्णः इत्यर्थः अतिमधुर इति भावः, न-कारः नेति निषेधसूचिका वागित्यर्थः, सपदि तत्क्षणं, सन्तापशान्तिं विरचयतीत्यनुषङ्गः। मालिनी वृत्तम्॥ ३२॥

लवलीमिति।—हे कान्ते! इत्यध्याहार्य्यं, तव कपोले गण्डदेशे, कोमलत्विषा मृदुलकान्त्या, लीलया अवहेलया, लवलीं लताविशेषफलं, कवलीकुर्वति अधरीकुर्वति सतीत्यर्थः, परिपाण्डुरे अतिविशदे, पुण्डरीकषण्डे पद्मसमूहे, परितः समन्तात्, महाऽऽधयः महत्यः मानसपीडाः, परिपेतुः पतन्ति स्म, स्वापेक्षया अधिकपाण्डुराया अपि लवल्या अधरीकरणात् ममाप्यवश्यमेव अधरीकारः सम्भवतीति धिया सिताम्भोजवृन्दमतीव विषादमनुभवतीति भावः। सुन्दरी वृत्तम्—"अयुजोर्यदि सौ जगौ युजोः सभरा लगौ यदि सुन्दरी तदा" इति तल्लक्षणात्॥ ३३॥

यौवनोद्गमनितान्तशङ्किताः शीलशौर्यबलकान्तिलोभिताः ।
सङ्कुचन्ति विकसन्ति राघवे जानकीनयननीरजश्रियः ॥ ३४ ॥

अधिरोप्य हरस्य हन्त ! चापं
परितापं प्रशमय्य बान्धवानाम् ।
परिणेष्यति वा न वा युवाऽयं
निरधारि मिथिलाधिनाथपुत्रीम् ॥ ३५ ॥

भुजपञ्जरे गृहीता नवपरिणीता वरेण रहसि वधूः ।
तत्कालजालपतिता बालकुरङ्गीव वेपते नितराम् ॥ ३६ ॥

उपनिषदः परिपीता गीता च हन्त ! मतिपथं नीता ।
तदपि न हा ! विधुवदना मानससदनात् बहिर्याति ॥ ३७ ॥

यौवनेति ।—जानक्याः सीतायाः, नयने नीरजे पङ्कजे इव, तयोः श्रियः कान्तयः, राघवे रामे, यौवनोद्गमेन यौवनोद्रेकेण, नितान्तं शङ्किताः युवाऽयं यौवराज्ये सततं व्यापृतो नास्मत्प्रीतिकरो भविष्यतीति धिया सञ्जातशङ्काः सत्यः, सङ्कुचन्ति सङ्कोचं यान्ति, तथा शीलेन विनयादिना, शौर्येण हरधनुर्भङ्गदर्शनादलौकिकेनेति भावः, बलेन सामर्थ्येन, कान्त्या अपूर्वया श्रिया चेत्यर्थः, लोभिताः जातस्पृहाः सत्यः, विकसन्ति प्रफुल्लतां गच्छन्तीत्यर्थः । इन्द्रवज्रा वृत्तम् ॥ ३४ ॥

अधिरोप्येति ।—अयं युवा, राम इति शेषः, मिथिलाधिनाथपुत्रीं जानकीं, परिणेष्यति उद्वक्ष्यति, न वा ? इति संशये इति शेषः, हन्त ! हर्षे, हरस्य चापं धनुः, अधिरोप्य मौर्व्या सङ्गमय्य, बान्धवानां जनकादीनां, परितापं हरधनुर्भङ्गविषये उद्वेगमिति भावः, प्रशमय्य शान्तिं नीत्वा, धनुर्भङ्क्त्वेत्यर्थः, निरधारि राम एवायं जानकीं परिणेष्यतीति निर्द्धारित इत्यर्थः । मालभारिणी वृत्तम् ॥ ३५ ॥

भुजेति ।—नवपरिणीता नवोढ़ा, वधूः रहसि एकान्ते, वरेण भुज एव पञ्जरः तस्मिन् गृहीता धृता, परिवेष्टिता सतीत्यर्थः, तत्कालं जालपतिता व्याधपाशपतिता, बालकुरङ्गीव बालमृगीव, नितराम् अत्यर्थं, वेपते कम्पते । गीति वृत्तम् ॥ ३६ ॥

उपनिषद इति ।—उपनिषदः वेदान्तशास्त्राणि, "एकमेवाद्वितीयं

अकरुणहृदय! प्रियतम! मुञ्चामि त्वामितः परं नाहम्।
इत्यालपति कराम्बुजमादायालीजनस्य विकला सा॥ ३८॥
लोभात् वराटिकानां विक्रेतुं तक्रमविरतमटन्त्या।
लब्धो गोपकिशोर्य्या मध्येरथ्यं महेन्द्रनीलमणिः॥ ३९॥
रूपारुचिं निरसितुं रसयन्त्या हरिमुखस्य लावण्यम्।
सुदृशः शिव! शिव! सकले जाता सकलेरेव जगत्यरुचिः॥४०॥

---

ब्रह्म" "तत् त्वमसि" इत्यादि महावाक्यानीति यावत्, परिपीताः सम्यक् पर्य्यालोचिता इत्यर्थः, गीता अर्जुनं प्रति भगवद्वाक्यजातमिति यावत्, हन्त! हर्षे, मतिपथं नीता सानन्दं बुद्ध्या अनुशीलितेति यावत्, हा! खेदे, तदपि तथाऽपि, विषयाणाम् असारत्वज्ञाने सञ्जातेऽपीत्यर्थः, विधुवदना चन्द्रमुखी, मानसमदनात् हृदयगृहात्, न वहिः याति न चलतीत्यर्थः, तामेव परमार्थज्ञानेन सततं चिन्तयामीति भावः। आर्य्या वृत्तम्॥ ३७॥

अकरुणेति।—अकरुणहृदय! हे निर्दयहृदय! प्रियतम! इतः परम् अहं त्वां न मुञ्चामि न त्यजामि, इति इत्थं, सा प्रिया, विकला कातरा, भाविमद्वियोगेनेति भावः, आलीजनस्य सखीजनस्य, कराम्बुजं कर-कमलम्, आदाय गृहीत्वा, आलपति कथयति। भूतसामीप्ये लट्। गीति वृत्तम्॥ ३८॥

लोभादिति।—वराटिकानां कपर्दकानां, लोभात् तक्रं दुग्धविकार-विशेषं, विक्रेतुम् अविरतं सततम्, अटन्त्या भ्रमन्त्या, गोपकिशोर्य्या गोपालबालिकया, मध्येरथ्यं रथ्याया मध्ये, महेन्द्रनीलमणिः इन्द्रनील-रत्नं, श्रीकृष्ण इति भावः, लब्धः प्राप्तः। अत्र तुच्छमर्थमभिधावतो महा-मूल्यरत्नप्राप्तिरिव गोप्या अतीवसौभाग्यमिति भावः। गीति वृत्तम्॥३९॥

रूपे इति।—रूपे सौन्दर्य्ये, अरुचिम् अप्रीतिं, निरसितुं निवर्त्तयितुं, हरिमुखस्य श्यामसुखस्य, लावण्यं लवणरसं, रसयन्त्या आस्वादयन्त्या, इवेति प्रतीयमानोत्प्रेक्षा, अरुचिनिवारणार्थम् अन्नैर्यथा लवणरस आस्वाद्यते, तद्वत् प्रणयकोपेन स्वसौन्दर्य्ये जनितायाः अप्रीतेर्निवारणेन पुनः प्रीतिं स्थापयितुमिति भावः, सकलैरेव प्रणयकुपितायाः एव, सुदृशः,

किं जल्पसि मुग्धतया हन्त ! ममाङ्गं सुवर्णवर्णमिति ? ।
तप्यति पतति हुताशे तदा हताशे ! तुलां तवारोहेत् ॥ ४१ ॥
औत्सुक्यात् परिमिलतां त्रपया सङ्कोचमञ्चताञ्च मुहुः ।
नवसङ्गमयोर्यूनोर्नयनानामुत्सवो जयति ॥ ४२ ॥
गरिमाणमर्पयित्वा लघिमानं कुचतटात् कुरङ्गदृशाम् ।
स्वीकुर्वते नमस्तेषां यूनां धैर्याय निर्विवेकाय ॥ ४३ ॥

तस्यां महिलायां इति शेषः, शिव ! शिव ! इति खेदे, सकले सर्वस्मिन् जगति, वस्तुनीति यावत्, अरुचिः अप्रीतिः, द्वेष इति यावत्, जाता भूता । इत्या नायकं प्रत्युक्तिरियम् । गीति वृत्तम् ॥ ४० ॥

किमिति ।—हन्तेति विषादे, मम अङ्गं सुवर्णवर्णं काञ्चनवर्णम्, इति मुग्धतया बालिश्येन, किं कथं, जल्पसि ? सादरं कथयसि ? इति भावः, हे हताशे ! सुवर्णेन मदङ्गं सममिति वृथा जल्पिनीत्यर्थः, हुताशे अग्नौ, पतति तप्यति सति, सुवर्णे इति शेषः, तदा अग्न्यात्तापसमये इत्यर्थः, तव तुलां सादृश्यम्, आरोहेत् प्राप्नुयात्, सुवर्णमिति शेषः, तवाङ्गं सामान्यसुवर्णतुल्यं न, अपि तु अग्नितप्यमानसुवर्णसदृशमुज्ज्वलमिति भावः । गीति वृत्तम् ॥ ४१ ॥

औत्सुक्यादिति ।—औत्सुक्यात् दर्शनोत्कण्ठावशात्, परिमिलतां सङ्गच्छतां, त्रपया लज्जया, मुहुः सङ्कोचं निमीलनम्, अञ्चतां गच्छताञ्च, नवसङ्गमयोः नवं सङ्गं प्राप्तयोः, यूनोः युवदम्पत्योः, नयनानाम् उत्सवः आनन्दः, जयति सर्वोत्कर्षेण वर्त्तते, अतिमधुरतया राजते इत्यर्थः । आर्य्या वृत्तम् ॥ ४२ ॥

गरिमाणमिति ।—गरिमाणं गुरुत्वं, स्तनेभ्य इति शेषः, अर्पयित्वा, कुचतटायेति भावः, कुरङ्गदृशां मृगाक्षीणां, कुचतटात् स्तनदेशात्, लघिमानं स्वीकुर्वते गृह्णते, अत एव निर्विवेकाय विवेकरहिताय, गुरुणा लघुनो वस्तुनो विनिमयादिति भावः, तेषां कामातुराणामिति भावः, यूनां धैर्य्याय नमः, मृगाक्ष्याः कुचयोर्गौरवं दृष्ट्वा यूनां धैर्य्यं सविवेकं विगलतीति भावः ॥ ४३ ॥

अञ्चति वयसि प्रथमे समुदञ्चति तरुणिमनि तदा सुदृशः।
दधति स्म मधुरिमाणं वाचो गतयश्च विभ्रमाश्च भृशम् ॥ ४४ ॥
निःसीमशोभासौभाग्यं नताङ्ग्या नयनद्वयम्।
अन्योऽन्यालोकनानन्द-विरहादिव चञ्चलम् ॥ ४५ ॥
गुरुमध्ये हरिणाक्षी मार्त्तिकशकलैर्निहन्तुकामं माम्।
रदयन्त्रितरसनाग्रं तरलितनयनं निवारयाञ्चक्रे ॥ ४६ ॥
नयनाञ्चलावमर्शं या न कदाचित् पुरा सेहे।
आलिङ्गिताऽपि जोषं तस्थौ साऽऽगन्तुकेन दयितेन ॥ ४७ ॥

अञ्चतीति।—सुदृशः सुनयनायाः, प्रथमे वयसि शैशवे, अञ्चति गच्छति, तथा तरुणिमनि तारुण्ये, समुदञ्चति समागच्छति सति, तदा वाचः वचनानि, गतयः गमनानि, विभ्रमाः विलासाश्च, भृशमतिशयेन, मधुरिमाणं मनोहारित्वं, दधति स्म। गीति वृत्तम् ॥ ४४ ॥

निःसीमेति।—नताङ्ग्या यौवनभरनतावयवायाः, कान्ताया इति शेषः, नयनद्वयं निःसीम सीमारहितम्, अतिशयितमिति यावत्, शोभा-सौभाग्यं सौन्दर्य्यसम्पत् यस्य तथोक्तं, निरतिशयसौन्दर्य्यवदित्यर्थः, अत एव अन्योऽन्यस्य परस्परस्य, आलोकनं दर्शनं, तेन आनन्दः प्रीतिः, तद्विरहादिव तदलाभादिव, चञ्चलं लोलं, भवतीति शेषः। पथ्यावक्त्रं वृत्तं—युजोश्चतुर्थतो जेन पथ्यावक्त्रं प्रकीर्त्तितम्" इति तल्लक्षणात् ॥ ४५ ॥

गुर्विति।—गुरूणां गुरुजनानां, श्वश्र्वादीनामित्यर्थः, मध्ये हरिणाक्षी मृगनयना, कान्तेति शेषः, मार्त्तिकशकलैः मृत्तिकाखण्डैः, लोष्ट्रैरिति यावत्, निहन्तुकामं प्रवृत्तमानसं, सङ्केतार्थमिति भावः, मां रदैः दशनैः, यन्त्रितम् अवरुद्धं, रसनाग्रं जिह्वाऽग्रभागः यस्मिन् कर्म्मणि तत् यथा तथा, तरलिते चञ्चले, नयने यस्मिन् तत् यथा तथा, निवारयाञ्चक्रे निवारित-वती। गीति वृत्तम् ॥ ४६ ॥

नयनेति।—या पुरा कदाचित् नयनाञ्चलस्य नेत्रप्रान्तस्य, अवमर्शम् अवलोकनम्, अपाङ्गदर्शनमिति भावः, कथम्, अपिरलाघ्यार्थ्यः, कथमपि न सेहे, या केनापि पुरा नावलोकयितुं शक्तेति भावः, सा

मानपराङ्मुखवदनाऽपि सा प्रिया शयानैव करकमले।
उद्वेल्लद्भुजमलसग्रीवाबन्धं कपोलमाधत्ते ॥ ४८ ॥
लोचनफुल्लाम्भोजद्वयलोभान्दोलितैकमनाः शुभे!।
कस्तूरीतिलकमिषादयमलिकेलिस्तवोल्लसति ॥ ४९ ॥
अधिरजनि प्रियसविधं कथमपि संवेशिता बलात् गुरुभिः।
किं भवितेति नु शङ्कां पङ्कजनयना परं स्पृशति ॥ ५० ॥
चिन्तामीलितमानसो मनसिजः सख्यो विहीनप्रभाः
प्राणेशः प्रणयाकुलः पुनरसावास्तां समस्ता कथा।

आगन्तुकेन अपरिचितेन, दयितेन पत्या, आलिङ्गिताऽपि जोषं तूष्णीं, तस्थौ स्थिता। पूर्वं दृष्टाऽपि तेन विरूपमाचरितवती, इदानीम् आलिङ्गताऽपि न किमपीति यौवनोद्भेद एवात्र हेतुरिति भावः। गीति वृत्तम् ॥ ४७ ॥

मानेति।—सा प्रिया मानेन प्रणयकोपेन, पराङ्मुखं परावर्त्तमानं, वदनं यस्याः तथाभूताऽपि, शयानैव शयनं कुर्वाणा एव, करकमले, मदीये इति शेषः, उद्वेल्लन् सञ्चलन्, भुजो यस्मिन् तत् यथा तथा, अलसः ग्रीवाबन्धः यस्मिन् तत् यथा तथा, कपोलं गण्डदेशम्, आधत्ते निदधाति। गीति वृत्तम् ॥ ४८ ॥

लोचनेति।—शुभे! हे कल्याणि! अयम् अलिकेलिः भ्रमरविलासः, तव कस्तूरीतिलकमिषात् मृगमदविरचितपत्रभङ्गव्याजात्, लोचने नयने, एव, फुल्ले विकसिते, अम्भोजे पद्मे, तयोर्द्वयं तस्मिन् लोभात् आन्दोलितं चलितम्, एकं केवलं, मनो यस्य तथाभूतः सन्, उल्लसति राजते। अत्र प्रकृततिलकनिषेधेनालिकेलिस्थापनादपह्नुतिरलङ्कारः। आर्य्या वृत्तम् ॥ ४९ ॥

अधीति।—अधिरजनि रजन्यां,विभक्त्यर्थेऽव्ययीभावः; गुरुभिः श्वश्रूादिभिः, बलात् कथमपि अतिकष्टेन, प्रियसविधे कान्तसमीपे, संवेशिता शायिता, पङ्कजे इव नयने यस्याः सा कान्ता, किं भविता नु? प्रियसविधे शयने किं फलं भविष्यति? इति सवितर्कं यथा तथा इत्यर्थः, नु इति वितर्के, परं केवलं, शङ्कां स्पृशति आलोचयति। आर्य्या वृत्तम् ॥ ५० ॥

एतत्त्वां प्रतिबोधयामि मम चेदुक्तिं हितां मन्यसे
मुग्धे ! मा कुरु मानमाननमिदं राकापतिर्जेष्यति ॥ ५१ ॥

अलङ्कर्त्तुं कर्णौ भृशमनुभवन्त्या नवरुजां
सशीत्कारं तिर्य्यग्वलितवदनाया मृगदृशः ।
कराब्जव्यापारानतिसुकृतसारान् रसयतो
जनुः सर्व्वं श्लाघ्यं जयति ललितोत्तंस ! भवतः ॥ ५२ ॥

चिन्तेति।—मुग्धे ! हे मूढ़े ! मनसिजः कामः, चिन्तया मीलितं तिरोहितं, मानसं यस्य तथाभूतः, न स्फुरतीति भावः, सख्यः सहचर्य्यः, विहीना प्रभा स्फूर्त्तिरित्यर्थः यासां ताः, बहुसान्त्वनेनापि अकृतकार्य्यतया मलिनवदना इति भावः, प्राणेशः पुनः कान्तस्तु, प्रणयाकुलः प्रेमपर इत्यर्थः, प्रणयार्थीति यावत्, असौ एषा, समस्ता कथा आस्तां तिष्ठतु, चेत् यदि, मम उक्तिं वचनं, हितां शुभकरीमित्यर्थः, मन्यसे भावयसि, तदा त्वाम् एतत् प्रतिबोधयामि विशेषेण ज्ञापयामि, मानं मा कुरु, कथम् ? इत्याह, आननमिति।—राकापतिः पौर्णमासीचन्द्रः, "पूर्णे राका निशाकरे" इत्यमरः ; इदम् आननं मुखं, तवेति शेषः, जेष्यति अभिभविष्यति, तव मुखं चन्द्रादपि मनोहरतया चन्द्रविजयि, किन्तु मानेन मालिन्यमुपगमिष्यत् स चन्द्रस्तन्मुखमतिशयिष्यते इति भावः। शार्दूल-विक्रीड़ितं वृत्तम् ॥ ५१ ॥

अलमिति।—ललितोत्तंस ! हे शोभनकर्णभूषण ! कर्णौ अलङ्कर्त्तुं विभूषयितुं, भृशमतिशयेन, नवरुजाम् अभिनवां पीड़ाम्, अनुभवन्त्याः, अलङ्कारधारणार्थं कर्णवेधकरणस्य पीड़ादायकत्वादिति भावः, अत एव सशीत्कारं शीत्कृतिसहितं, तिर्य्यक् तिरश्चीनं यथा तथा, वलितं चलितं, वदनं यस्याः तथाभूतायाः, मृगदृशः मृगाक्ष्याः, अतिसुकृतसारान् अत्यन्तपुण्यफलभूतानिति भावः, कराब्जव्यापारान् करकमलस्पर्शादीन् इत्यर्थः, रसयतः स्वादयतः, अनुभवत इत्यर्थः, भवतः श्लाघ्यं प्रशस्यं, सर्व्वं जनुः जन्म, "जनुर्जनन-जन्मानि" इत्यमरः ; जयति सर्व्वोत्कर्षेण वर्त्तते। शिखरिणी वृत्तम् ॥ ५२ ॥

आयातैव निशा निशापतिकरैः कीर्णं दिशामन्तरं
भामिन्यो भवनेषु भूषणगणैरङ्गानि संस्कुर्वते ।
मुग्धे ! मानमपाकरोषि न मनागद्यापि रोषेण ते !!
हा ! हा ! बालमृणालतोऽप्यतितरां तन्वी तनुस्ताम्यति ॥५३॥

वाचं माङ्गलिकीं प्रयाणसमये जल्पत्यनल्पं जने
केलीमन्दिरमारुतायनमुखे विन्यस्तवक्त्राम्बुजा ।
निःश्वासग्लपिताधरं परिपतद्बाष्पार्द्रवक्षोरुहा
बाला लोलविलोचना शिव ! शिव ! प्राणेशमालोकते ॥५४॥

आयातेति।—मुग्धे ! हे मूढे ! निशा रजनी, आयातैव उपस्थितैव, निशापतिकरैः चन्द्रकिरणैः, दिशाम् अन्तरं कीर्णं व्याप्तं, भामिन्यः कामिन्यः, भवनेषु गृहेषु, भूषणगणैः अलङ्कारसमूहैः, करणे तृतीया ; अङ्गानि संस्कुर्वते संस्कृतानि कुर्वन्ति, भूषयन्तीत्यर्थः, अद्यापि इदानीमपि, इत्युद्दीपनकालेऽपीति भावः, मानं मनाक् ईषदपि, न अपाकरोषि !! न निराकरोषि !! हा इति अत्यन्तविषादसूचकं पदद्वयं, रोषेण कोपेन, ते तव, बालमृणालतः अभिनवमृणालादपि, अतितराम् अतिशयेन, तन्वी कोमलेत्यर्थः, तनुः अङ्गं, ताम्यति क्लाम्यति। शार्दूलविक्रीडितं वृत्तम् ॥ ५३ ॥

वाचमिति।—प्रयाणसमये यात्राकाले, कान्तस्य इति शेषः, जने पित्रादिवर्गे, मङ्गलाय हिता माङ्गलिकी तां, वाचं शुभाशिषमित्यर्थः, अनल्पम् अधिकं यथा तथा, जल्पति उच्चारयति सति, केलीमन्दिरस्य क्रीड़ागृहस्य, मारुतायनमुखे वातायनविवरे इत्यर्थः, विन्यस्तं स्थापितं, वक्त्रमेव वदनमेव, अम्बुजं पद्मं यया तथाभूता, बाला मुग्धा कान्ता, परिपतद्भिः स्रवद्भिः, बाष्पैः अश्रुभिः, आर्द्रौ सिक्तौ, वक्षोरुहौ स्तनौ यस्याः तथोक्ता, तथा लोले चञ्चले, कातरे इति यावत्, विलोचने नयने यस्याः तथाविधा सती, निःश्वासेन उष्णदीर्घनिश्वासेनेत्यर्थः, ग्लपितः संशोषितः इत्यर्थः, अधरो यस्मिन् तत् यथा तथा, प्राणेशं कान्तम्, आलोकते पश्यति, शिव शिवेति विषादसूचनाय। शार्दूलविक्रीडितं वृत्तम् ॥ ५४ ॥

दारिद्र्यं भजते कलानिधिरयं राकाऽधुना म्लायति
स्वैरं कैरवकाननेषु परितो मालिन्यमुन्मीलति ।
द्योतन्ते हरिदन्तराणि सुहृदां वृन्दं समानन्दति
त्वय्येतच्छपि काञ्चनाङ्गि ! वदनाम्भोजे विकासश्रियम् ॥ ५५॥
पटीरद्रुभुजङ्गपुङ्गवमुखाद् याता इवातापिनो
वाता वान्ति दहन्ति लोचनममी ताम्रा रसालद्रुमाः ।
एते हन्त ! किरन्ति कूजितमयं हालाहलं कोकिलाः
बाला बालमृणालकोमलतनुः प्राणान् कथं रक्षतु ? ॥५६॥

दारिद्र्यमिति ।—काञ्चनाङ्गि ! हे सुवर्णवत् गौराङ्गि ! चेत् यदि, त्वं वदनाम्भोजे मुखकमले, विकासश्रियं विकासशोभाम्, अश्नसि लभसे, मानमालिन्यं परित्यक्ष्यसीति भावः, तदा अयं कलानिधिः पूर्णः शशधरः, दारिद्र्यं दैन्यं, भजते प्राप्नोति, पराजितत्वादिति भावः, अधुना इत्यनन्तरं एवेति शेषः, तव वदनाम्भोजविकाशसमकालमेवेत्यर्थः, राका पौर्णमासी रजनी, म्लायति मालिन्यं गच्छति, चन्द्रस्य मालिन्यादिति भावः, परितः समन्तात्, कैरवकाननेषु कुमुदवनेषु, मालिन्यं म्लानत्वम्, अविकासभाव इत्यर्थः, स्वैरं स्वच्छन्दं यथा तथा, उन्मीलति स्फुरति, हरिदन्तराणि दिगन्तराणि, "दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः" इत्यमरः ; द्योतन्ते शोभन्ते, तव मुखश्रियैवेति भावः, तथा स्वं निजं, सुहृदां सखीनामिति भावः, वृन्दं गणः, आनन्दति आनन्दमनुभवति । शार्दूलविक्रीडितं वृत्तम् ॥ ५५ ॥

पटीरेति ।—पटीरद्रुश्चन्दनतरुः, तत्र ये भुजङ्गपुङ्गवाः आशीविषप्रवराः, तेषां मुखात् याता इव निःसृता इव, आ सम्यक्, तापयन्तीति आतापिनः नितान्ततापकारिण इत्यर्थः, विषमयत्वादिति भावः, वाताः दक्षिणानिला इत्यर्थः, वान्ति वहन्ति, अमी ताम्राः रक्ताः, नवपल्लवोद्गमादिति भावः, रसालद्रुमाः चूततरवः, लोचनं दहन्ति सन्तापयन्ति, अतीवोद्दीपकत्वादिति भावः, हन्त ! खेदे, एते कोकिलाः कूजितमयं हालाहलं कालकूटं, किरन्ति वर्षन्ति, अतः बालमृणालवत् कोमला सही,

आयातैव निशा मनो मृगदृशामुन्निद्रमातन्वती
मानो मे कथमेव सम्प्रति निरातङ्कं हृदि स्थास्यति ?।
ऊहापोहमिमं सरोजनयना यावद्विधत्ते त्वरां
तावत् कामनृपातपत्रसुषमं बिम्बं बभासे विधोः ॥ ५७ ॥

प्रभातसमयप्रभां प्रणयनिह्नुवाना रमा-
दमुष्य निजपाणिना दृशममीलयल्लीलया ।
अयन्तु खलु पद्मिनीपरिमलालिपाटच्चरो
रवेरुदयमध्यगादधिकचारु तैर्मारुतैः ॥ ५८ ॥

तनुर्यस्याः तथाभूता, बाला मुग्धा कान्ता, कथं केन प्रकारेण, प्राणान् रक्षतु ? धारयतु ? इति यावत् । अत्र चतुर्थपादवाक्यस्य पूर्वपादत्रय-वाक्यानां हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः,—"हेतोर्वाक्य-पदार्थत्वे काव्यलिङ्गं निगद्यते" इति दर्पणोक्तेः । शार्दूलविक्रीडितं वृत्तम् ॥ ५६ ॥

आयातेति ।—मृगदृशां मृगाक्षीणां, मनः उन्निद्रं विगतनिद्रम्, उद्बुद्धमिति यावत्, उत्कण्ठापीडितमिति भावः, आतन्वती कुर्वती, निशा वासन्ती रात्रिरिति भावः, आयातैव आगतैव, अतः मे मम, हृदि हृदये, मानः प्रणयकोपः, ईर्ष्याकोपो वा, "मानः कोपः स तु द्वेधा प्रणयेर्ष्या-समुद्भवः" इति दर्पणोक्तेः; सम्प्रति इदानीं, कथमेव केन वा प्रकारेण, निरातङ्कं निर्भयं यथा तथा, स्थास्यति ? नैव स्थास्यतीत्यर्थः, इमम् ऊहं तर्कम्, उद्बोधय कृत्वा, इत्थं पर्य्यालोच्येत्यर्थः, सरोजनयना पद्माक्षी, यावत् त्वरां, प्रियतमसकाशगमने इति भावः, विधत्ते, तावत् काम एव नृपः राजा, तस्य आतपत्रवत् धवलच्छत्रवत्, सुषमा परमा शोभा यस्य तत्, विधोश्चन्द्रस्य, बिम्बं मण्डलं, "बिम्बोऽस्त्री मण्डलं त्रिषु" इत्यमरः; बभासे रराज, उदियायेति यावत् । अभिसारिणी सङ्केतस्थानस्थित-प्रियतमसकाशे अन्धकारे केनापि असंलक्षिता व्रजति, अत्र तु चन्द्रोदयात् तद्विघात इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ५७ ॥

प्रभातेति ।—प्रणयेन निह्नुवाना गोपयन्ती, स्नेहतभावमिति भावः, कामिनीति शेषः; तृतीयासमासः न तु द्वितीयासमासः, अमुष्य नायकस्य

विदूरादाश्चर्यस्तिमितमथ किञ्चित् परिचया-
दुदञ्चच्चाञ्चल्यं तदनु परिविस्फारितरुचि ।
गुरूणां सङ्घाते सपदि मयि याते समजनि
त्रपाघूर्णत्तारं नयनमिह सारङ्गजदृशः ॥ ५९ ॥

कपोलावुन्मीलत्पुलकनिकुरम्बे मयि मनाङ्-
मृशत्यन्तःस्मेरस्तबकितमुखाम्भोरुहरुचेः ।
कथङ्कारं शक्याः परिगदितुमिन्दीवरदृशो
दलद्द्राक्षानिर्यद्रसभरसपत्ना भणितयः ? ॥ ६० ॥

भ्रमरस्य, रसात् अनुरागात्, लीलया शृङ्गारजभावविशेषेण, निजपाणिना प्रभातसमयप्रभां प्रभातकालकान्तिं, दृशम् अमीलयत् ; अयन्तु पद्मिनीपरिमलस्य पद्मसौरभस्य, अपिलुण्टाकः पाटच्चरः चौरः, तैः प्रभातकालप्रसिद्धैः, मारुतैः अधिकचारु यथा तथा रवेरुदयम् अभ्युदयात् प्राप । पृथ्वी वृत्तम्— "जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः" इति तल्लक्षणात् ॥ ५८ ॥

विदूरादिति ।—मयि सपदि सहसा, याते, गर्हिमिति शेषः, सारङ्गजदृशः मृगाक्ष्याः, मत्कान्ताया इति भावः, नयनं विदूरात् दूरतो मद्दर्शनादित्यर्थः, आश्चर्येण स्तिमितं कथमयं सहसा समागत इति विस्मयेन निश्चलम्, अथ परिचयात् सन्निधानात्, किञ्चिदीषत्, उदञ्चत् उद्गच्छत्, चाञ्चल्यं यस्य तथाभूतं, समुत्सुकतया ईषत्तरल, तदनु तदनन्तरं, परिविस्फारिता रुचिर्यस्य तथाक्तम् आनन्देन विकस्वरमिति यावत्, इह अस्मिन्,गुरूणां सङ्घाते समूहे, मत्समीपमुपगते इति शेषः, त्रपया लज्जया, घूर्णन्तो तारा यस्य तथाभूतं, समजनि संवृत्तम् । शिखरिणी वृत्तम् ॥ ५९ ॥

कपोलाविति ।—उन्मीलन् उद्गच्छन्,पुलकानां रोमाञ्चानां, निकुरम्बः निचयः यस्य तादृशे, मयि कपोलौ गण्डौ, प्रियाया इति शेषः, मनाक् अल्पं यथा तथा, मृशति स्पृशति सति, अन्तः स्मेरा अन्तर्विकाशिनी, अत एव स्तबकितस्य सञ्जातस्तवकस्य, मुखाम्भोरुहस्य रुचिः कान्तिर्यस्याः तथाभूतायाः, इन्दीवरदृशः नीलोत्पलाक्ष्याः, दलन् स्फुरन्, द्राक्षाया निर्यन् निःसरन्, यो रसभरः रसप्रवाहः, तत्सपत्नाः तत्सदृश्यः, भणितयः वचांसि,

राजानं जनयाम्बभूव सहसा जैवातृक ! त्वान्तु यः
सोऽयं कुण्ठितसर्वशक्तिनिकरो जातो जराऽऽर्त्तो विधिः ।
सम्प्रत्युन्मदखञ्जरीटनयनावक्त्राय नित्यश्रिये
दाता राज्यमखण्डमस्य जगतो धाता नवो मन्मथः ॥११॥

आविर्भूता यदवधि मधुस्यन्दिनी नन्दसूनोः
कान्तिः काचिन्निखिलनयनाकर्षणे कार्मणज्ञा ।
श्वासो दीर्घस्तदवधि मुखे पाण्डिमा गण्डमूले
शून्या वृत्तिः कुलमृगदृशां चेतसि प्रादुरासीत् ॥ १२ ॥

---

परिगदितुं कथयितुं, वाचा प्रकाशयितुमिति यावत्, कथङ्कारं केन प्रकारेण, शक्याः? वाचा प्रकाशयितुं नैव शक्नोमीत्यर्थः। सखार्यं प्रत्युक्तिः। शिखरिणी वृत्तम् ॥ १० ॥

राजानमिति।—जैवातृक ! हे चन्द्र ! "अब्जो जैवातृकः सोमः" इति चन्द्रपर्य्याये अमरः ; यो विधिः, त्वां राजानं, द्विजानामिति शेषः, जनयाम्बभूव उत्पादितवान्, कृतवानित्यर्थः, सोऽयं विधिः सहसा जरया जरसा, आर्त्तः सन् कुण्ठितः सङ्कुचितः, सर्वासां शक्तीनां निकरो यस्य तथाभूतः, जातः ; सम्प्रति अस्य जगतो नवो नूतनः, धाता स्रष्टा, मन्मथः नित्या सन्तता, श्रीर्यस्य तथोक्ताय, अहोरात्रशोभिने इत्यर्थः, उन्मदः मदमत्तः, खञ्जरीटः खञ्जनपक्षी, तद्वत् नयनं यस्याः तस्याः कामिन्याः, वक्त्राय मुखाय, अखण्डं सम्पूर्णं, राज्यम् आधिपत्यं, दाता दास्यतीत्यर्थः, त्वं केवलं रात्रिमात्रशोभी, कान्तामुखन्तु दिवा-रात्रसमशोभमिति व्यतिरेकालङ्कारो व्यज्यते। शार्दूलविक्रीडितं वृत्तम् ॥ ११ ॥

आविर्भूतेति।—यदवधि यावत्, निखिलानां सर्वेषां जगतामित्यर्थः, नयनाकर्षणे कार्मणं (जादु) वशीकरणमन्त्रविशेषं, जानातीति तज्ज्ञा तत्र कुशलेत्यर्थः, मधुस्यन्दिनी मधुवर्षिणी, मनोहारिणीति भावः, नन्दसूनोः कृष्णस्य, काचित् अनिर्वचनीया, कान्तिः आविर्भूता प्रकटितेत्यर्थः, तदवधि तत आरभ्य, कुलमृगदृशां कुलाङ्गनानामित्यर्थः, मुखे दीर्घः श्वासः दीर्घनिश्वासः, गण्डमूले कपोलदेशे, पाण्डिमा पाण्डुभावः, तथा

प्रसङ्गे गोपानां गुरुषु महिमानं यदुपते-
रुपाकर्ण्य स्विद्यत्पुलकितकपोला कुलवधूः।
विषज्वालाजालं धगिति वमतः पन्नगपतेः
फणायामाश्चर्यं स्थगयतितरां ताण्डवविधिम्॥ ६३॥
कैशोरे वयसि क्रमेण तनुतामायाति तन्व्यास्तना-
वागामिन्यखिलेश्वरे रतिपतौ तत्कालमस्याज्ञया।
आस्ये पूर्णशशाङ्कता नयनयोस्तादात्म्यमम्भोरुहां
किञ्चामीष्टमृतस्य भेदविगमः साचिस्मिते तात्त्विकः॥ ६४॥

चेतसि अन्तःकरणे, शून्या वृत्तिः व्यापारः, प्रादुरासीत् आविरभूदित्यर्थः, दीर्घश्वास-पाण्डुता-चित्तशून्यत्वानि नन्दसूनुगतप्रेमनिबन्धनानीति भावः। मन्दाक्रान्ता वृत्तं—"मन्दाक्रान्ताऽम्बुधिरसनगैर्मो भनौ तौ गयुग्मम्"इति लक्षणात्॥ ६२॥

प्रसङ्गे इति।—गोपानां गोरक्षकाणां, प्रसङ्गे वनवृत्तान्तकथावसरे, धगिति इत्यनुकरणेन, विषाणां ज्वाला शिखा इव, तज्जालं तत्समूहं, वमतः उद्गिरतः, पन्नगपतेः कालीयसर्पस्य, फणायाम् आश्चर्यं निर्भीकत्वेनाभूत-पूर्वं, यदुपतेः श्रीकृष्णस्य, ताण्डवविधिं नृत्यविधानं, तद्वृत्तान्तमित्यर्थः, उपाकर्ण्य श्रुत्वा, कुलवधूः गोपकुलाङ्गना, स्विद्यत्पुलकितकपोला स्विद्यन्तौ उद्गतस्वेदौ, पुलकितौ सञ्जातरोमहर्षौ च, कपोलौ गण्डौ यस्याः तथाभूता सती, तद्वृत्तान्तश्रवणेन हर्षः भयत्पकम्पनात् जातविस्मयत्वेन तदनु-रागाधिक्यात् जातघर्मपुलकतया व्यक्तशृङ्गारभावा सतीति भावः, गुरुषु गुरुजनविषये, गरिमाणं गौरवं, सम्मानमिति यावत्, स्थगयतितराम् अतिशयेन आच्छादयति, अतिशयेन त्यजतीत्यर्थः। शिखरिणी वृत्तम्॥ ६३॥

कैशोरे इति।—तन्व्याः कृशाङ्ग्याः, कैशोरे वयसि क्रमेण तनुतामा-याति सति कैशोरे वयसि अतिक्रान्ते सति इत्यर्थः, तनौ देहे, अखिलेश्वरे जगच्छासितरि, रतिपतौ कामे, आगामिनि आगमिष्यति सति, भव्यार्थ-त्वात् णिनि-योगे तनावित्यत्र न कर्मणि षष्ठी; अस्य कामस्य, आज्ञया

शयिता शैवलशयने सुषमाशेषा नवेन्दुलेखेव ।
प्रियमागतमपि सविधे सत्कुरुते वीक्षणैरेव ॥ ६५ ॥
विरहेण विकलहृदया विलपन्ती दयित ! दयितेति ।
प्रियमागतमपि सविधे परिचयहीनेव वीक्षते बाला ॥ ६६ ॥
अधरद्युतिरस्तपल्लवा मुखशोभा शशिकान्तिलङ्घिनी ।
तनुरप्रतिमा च सुभ्रुवो न विधेरस्य कृतिं विवक्षति ॥ ६७ ॥

तत्कालं तस्याः आस्ये मुखे, पूर्णशशाङ्कता, नयनयोः अम्भोरुहां पद्मानां, तादात्म्यमभेदः, सार्धस्मिते ईषत् वक्रहसिते, अमृतस्य सुधायाः, तात्त्विकः यथार्थः, भेदविगमः भेदराहित्यञ्च, आसीत् । शार्दूलविक्रीडितं वृत्तम् ॥ ६४ ॥

शयितेति ।—शैवलमेव शयनं शय्या तत्र, शयिता, विरहतापशान्तये इति भावः, अत एव नवेन्दुलेखेव सुषमा परमा शोभा एव, शेषः यस्याः तथाभूता, लावण्यमात्रावशिष्टेत्यर्थः ; यद्वा—सुषमायाः शेषः किञ्चिन्मात्रावशेषः यस्याः सा, ईषदवशेषलावण्या इत्यर्थः, काऽपि कामिनीति शेषः, सविधे समीपे, आगतमपि प्रियं कान्तं, वीक्षणैः अवलोकनैरेव, एवकारेण अभ्युत्थानादिव्यवच्छेदः, अभिमानादिति भावः, सत्कुरुते अभिनन्दयति । आर्या वृत्तम् ॥ ६५ ॥

विरहेणेति ।—विरहेण विच्छेदेन, विकलं व्याकुलं, हृदयं यस्याः सा तथोक्ता, अत एव दयित ! दयित ! प्रिय ! प्रिय ! इति विलपन्ती बाला मुग्धा कान्ता, सविधे सन्निधौ, आगतमपि प्रियं परिचयहीनेव अपरिचितेव, उदासीनेव इति भावः, वीक्षते अवलोकयति, अभिमानात् मानविरामाद्दति भावः । उद्गीति वृत्तम् ॥ ६६ ॥

अधरेति ।—सुभ्रुवः कान्तायाः, अस्ता निरस्ताः, अवज्ञाता इति भावः, पल्लवा यया तथाभूता, अधरद्युतिः अधरकान्तिः, शशिनः चन्द्रस्य, कान्तिं लङ्घते इति तथोक्ता शशिकान्तिलङ्घिनी चन्द्रद्युतिविजयिनी, मुखशोभा, अप्रतिमा सादृश्यरहिता, तनुः अङ्गञ्च, अस्य सर्वजनविदितस्य प्रसिद्धस्य, विधेः स्रष्टुः, कृतिं सृष्टिं, न विवक्षति न वक्तुमिच्छति,

व्यत्यस्तं नयति क्षणं क्षणमहो ! मौनं समालम्बते
सर्वस्मिन् विदधाति किञ्च विषये दृष्टिं निरालम्बनाम्।
श्वासं दीर्घमुरीकरोति न मनागङ्गेषु धत्ते धृतिं
वैदेहीविरहव्यथाविकलितो हा ! हन्त ! लङ्केश्वरः॥ ६८॥
उदितं मण्डलमिन्दो रुदितं सद्यो वियोगिवर्गेण।
मुदितञ्च सकलललनाचूडामणिशासनेन मदनेन॥ ६९॥
प्रादुर्भवति पयोदे कज्जलमलिनं बभूव नभः।
रक्तञ्च पथिकहृदयं कपोलपाली मृगीदृशः पाण्डुः॥ ७०॥

अपरस्य विधातुः सृष्टिरियमिति विवक्षतीति भावः। अत्र विधिसृष्टि-सम्बन्धेऽपि तदसम्बन्धोक्तेरतिशयोक्तिरलङ्कारः। गीति वृत्तम्॥ ६७॥

व्यत्यस्तमिति।—हा हन्तेति खेदातिशयसूचनार्थं पदद्वयम्; वैदेह्याः विदेहकुलजायाः सीतायाः, विरहेण विच्छेदेन, या व्यथा क्लेशः, तया विकलितः वैकल्यं प्राप्तः,व्याकुलित इत्यर्थः, लङ्केश्वरः रावणः, क्षणं व्यत्यस्तं व्यत्यासं, चित्तवैकल्यमित्यर्थः, नयति प्रकटयति,अहो! आश्चर्यं, क्षणं मौनं तूष्णीम्भावं, समालम्बते आश्रयति, किञ्च, सर्वस्मिन् विषये वस्तुनि, निरालम्बनां शून्यामित्यर्थः, दृष्टिं विदधाति व्यापारयति, दीर्घं श्वासम् उरीकरोति अङ्गीकरोति, मुञ्चतीत्यर्थः, अङ्गेषु शरीरेषु, मनाक् अल्पमपि यथा तथा, धृतिं धैर्य्यं सन्तोषं वा, न धत्ते नावलम्बते। अत्र बहुषु क्रियासु एकस्य कारकस्य निर्देशात् दीपकालङ्कारभेदः; तथा चोक्तं दर्पणे—"अप्रस्तुत-प्रस्तुतयोर्दीपकन्तु निगद्यते। अथ कारकमेकं स्यादनेकासु क्रियासु चेत्॥" इति। शार्दूलविक्रीडितं वृत्तम्॥ ६८॥

उदितमिति।—इन्दोश्चन्द्रस्य, मण्डलम् उदितं, सद्यः तत्क्षणम्, इन्दोरुदयक्षणे एवेत्यर्थः, वियोगिनां विरहिणां, वर्गेण रुदितं, चन्द्रोदयस्य विरहिणां सन्तापजनकत्वादिति भावः, सकलललनानां सर्वासां सुन्दरीणां, चूडामणिं शास्ति जगज्जयाय आज्ञापयतीति तथोक्तेन, मदनेन कामेन, मुदितञ्च प्रहृष्टञ्च, विजृम्भितञ्चेत्यर्थः। गीति वृत्तम्॥ ६९॥

प्रादुर्भवतीति।—पयोदे मेघे, प्रादुर्भवति उदिते सति, नभः आकाशं,

इदमप्रतिमं पश्य सरः सरसिजैर्वृतम् ।
सखे ! मा जल्प नारीणां नयनानि दहन्ति माम् ॥ ७१ ॥

मुञ्चसि नाद्यापि रुषं भामिनि ! मुदिरालिरुदियाय ।
इति सुदृशः प्रियवचनैरपायि नयनाब्जकोणशोणरुचिः ॥७२॥

आलोक्य सुन्दरि ! मुखं तव मन्दहासं
नन्दन्त्यमन्दमरविन्दधिया मिलिन्दाः ।
किञ्चासिताक्षि ! मृगलाञ्छनसम्भ्रमेण
चञ्चूपुटं चटुलयन्ति चिरं चकोराः ॥ ७३ ॥

कज्जलवत् मलिनं, पथिकानां प्रोषितानां, विरहिणामिति यावत्, हृदयं मनः, रक्तम् अनुरागेण आकुलमित्यर्थः, मृगदृशः मृगाक्ष्याः, कपोलपाली गण्डदेशः, पाण्डुश्च, बभूव, प्रियतमविरहादिति भावः ॥ ७० ॥

इदमिति ।—हे सखे ! सरसिजैः पद्मैः, वृतम् आकीर्णम्, अत एव अप्रतिमं सादृश्यरहितम्, इदं सरः सरोवरं, पश्य अवलोकय, नारीणां नयनानि, एतानीति शेषः, मां दहन्ति तापयन्ति, इति मा जल्प न कथय । अनुष्टुप् वृत्तम् ॥ ७१ ॥

मुञ्चसीति ।—भामिनि ! हे सुन्दरि ! अद्यापि अधुनाऽपि, रुषं कोपं, न मुञ्चसि !! न त्यजसि !! मुदिरालिः मेघकदम्बः, उदियाय उदयं गतः, मेघानामुद्दीपकत्वेऽपि त्वं मानं न मुञ्चसि !! इति भावः, इतीत्थं, प्रियवचनैः सुदृशः सुनयनायाः कान्तायाः, नयनमेव अब्जं पद्मं, तस्य कोणे प्रान्ते, अपाङ्गे इत्यर्थः, शोणा रक्ता, रुचिः प्रभा, कोपेनेति भावः, अपायि अपगता, निरस्तेत्यर्थः, मानोऽपगत इति भावः । उद्गीति वृत्तम् ॥ ७२ ॥

आलोक्येति ।—हे सुन्दरि ! मिलिन्दाः भ्रमराः, तव मन्दहासं मृदुहसितं, मुखम् आलोक्य दृष्ट्वा, अरविन्दधिया कमलमिदमिति बुद्ध्या, अमन्दम् अत्यर्थं, नन्दन्ति आनन्दमनुभवन्ति, किञ्च, असिताक्षि ! हे कृष्णतारनेत्रे ! चकोराः चन्द्रिकापायिपक्षिविशेषाः, मृगलाञ्छनसम्भ्रमेण मृगलाञ्छनः सकलङ्कश्चन्द्र इति भ्रान्त्या, चञ्चूपुटं चिरं सततं, दिवारात्रमित्यर्थः, चटुलयन्ति चञ्चलीकुर्वन्ति, त्वन्मुखचन्द्रिकापानार्थमुद्यच्छन्तीति

स्मितं नैतत् किन्तु प्रकृतिरमणीयं विकसितं
मुखं ब्रूते को वा ? कुसुममिदमुद्यत्परिमलम्।
स्तनद्वन्द्वं मिथ्या कनकनिभमेतत् फलयुगं
लता सेयं रम्या भ्रमरकुलनम्या न रमणी ॥ ७४ ॥
सङ्ग्रामाङ्गनसम्मुखाहतकियद्विश्वम्भराधीश्वर-
व्यादीर्णीकृतमध्यभागविवरोन्मीलन्नभोनीलिमा।
अङ्गारप्रखरैः करैः कवलयन्नेतन्महीमण्डलं
मार्त्तण्डोऽयमुदेति केन पशुना लोके शशाङ्कीकृतः ? ॥ ७५ ॥

भावः। अत्रोभयोर्वाक्ययोरपि भ्रान्तिमानलङ्कारः; तथा च दर्पणः,—"साम्यादतस्मिंस्तद्बुद्धिर्भ्रान्तिमान् प्रतिभोत्थिता" इति। वसन्ततिलकं वृत्तम् ॥ ७३ ॥

स्मितमिति।—एतत् पुरो दृश्यमानमिति भावः, स्मितं मृदुहसितं, न, किन्तु प्रकृत्या स्वभावेन, रमणीयं मनोहरं, विकसितं विकासः; भावे क्त प्रत्ययः; को वा जनः, मुखम्,इदमिति शेषः, ब्रूते ? वदति ? नैतन्मुखमित्यर्थः, तत् किम् ? इत्याह, इदम् उद्यन् उद्गच्छन्,परिमलो यस्य यस्मात् वा तत् उद्यत्परिमलं, कुसुमं पुष्पम्; स्तनयोः द्वन्द्व युगलम्,इदमिति शेषः, मिथ्या, नैव स्तनयुगलमेतदित्यर्थः, किं ततः ? इत्याह, एतत् कनकनिभं काञ्चनप्रभं, फलयुगं फलद्वयम्; इयं रमणी नारी, न, किं ततः ? इत्याह, इयं सा दृश्यमाना, रम्या मनोहारिणी, भ्रमरकुलैः नम्या नमयितुं शक्या, अतिमृद्वी इति भावः, लता वल्ली। अत्र भेदेऽप्यभेदरूपातिशयोक्तिरलङ्कारः; तथा च दर्पणः,—"सिद्धत्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यते"। शिखरिणी वृत्तम् ॥ ७४ ॥

सङ्ग्रामेति।—सङ्ग्रामाङ्गने सम्मुखमाहताः अपलायमानतया वैरिभिः नाशिताः,ये कियन्तः विश्वम्भराधीश्वराः राजानः, तैः व्यादीर्णीकृतं विदारितं,यत् मध्यमाङ्गं मध्यभागः,तस्य विवरेण छिद्रेण, उन्मीलन् प्रकाशमानः, नभोनीलिमा वियन्नैल्यं यत्र तादृशः, सङ्ग्रामहतनृपविदारितमध्यभागतया तच्छिद्रेण प्रकाशमानवियन्नीलिमेव सूर्य्ये दृश्यते, न तु अयं चन्द्रस्य कलङ्कः,

श्यामं सितञ्च सुदृशो न दृशोः स्वरूपं
किन्तु स्फुटं गरलमेतदथामृतञ्च ।
नो चेत् कथं निपतनादनयोस्तदेव
मोहं मुदञ्च नितरां दधते युवानः ? ॥ ७६ ॥
अलिर्मृगो वा नेत्रं वा यत्र किञ्चिन्न भासते ।
अरविन्दं मृगाङ्को वा मुखं वेदं मृगीदृशः ॥ ७७ ॥

कलङ्करूपेण भानन्तु अज्ञानकल्पितमिति भावः ; सूर्य्यमण्डलं भित्त्वा ब्रह्मलोकगमनं शास्त्रसिद्धम् ; अङ्गारप्रखरैः अग्निवत् सुतीव्रैः, करैः किरणैः; एतत् परिदृश्यमानं, महीमण्डलं भूवलयं, कवलयन् ग्रसमानः,पीड़यन् इति भावः, अयं रात्रौ नभसि परिदृश्यमानः पदार्थः, मार्त्तण्डः सूर्य्य एव, उदेति, उद्गच्छति, लोके जगति, केन पशुना पशुवत् मूढ़ेन, शशाङ्कीकृतः ? अशशाङ्कः शशाङ्कः कृतः ? नीलिमादर्शनेन चन्द्रभ्रान्त्या अशशाङ्के सूर्य्ये चन्द्रत्वारोपः कृतः ? सूर्य्य एवायं वास्तविकः, न तु चन्द्रः, चन्द्रस्य ईदृशसन्तापजनकत्वासम्भवादिति भावः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ७५ ॥

श्याममिति ।—सुदृशः सुनयनायाः रमण्याः, दृशोः नयनयो, स्वरूपं श्यामम् असितं, सितं श्वेतञ्च, न, किन्तु एतत् स्वरूपं, स्फुटं निश्चितं, गरलं विषम्, अथ अपरम्, अमृतञ्च,असितांशो विषं सितांशश्चामृतमिति भावः, नो चेत् यद्यन्यथा, कथमनयोः सितासितस्वरूपयोः दृशोः, निपतनात् अङ्गेषु पतनादित्यर्थः, युवानः तदेव तत्क्षणमेव, नितराम् अतिशयेन, मोहं चित्तविकृतिं, मुदं प्रीतिञ्च,दधते ? प्राप्नुवन्ति ? वसन्ततिलकं वृत्तम् ॥ ७६ ॥

अलिरिति ।—मृगीदृशः मृगाक्ष्याः,यत्र वस्तुनि,अलिः भ्रमरः वा,मृगः कृष्णसारः वा, नेत्रं वा न किञ्चित् भासते नैकतरतया निश्चितो भवतीति भावः, तत् इदं वस्तु, अरविन्दं पद्मं वा, मृगाङ्कः चन्द्रो वा, मुखं वा, इति नैव निश्चीयते इति शेषः । अत्र सन्देहालङ्कारः ; तथा च दर्पणः,—"सन्देहः प्रकृतेऽन्यस्य संशयः प्रतिभोत्थितः" इति । अनुष्टुप् वृत्तम् ॥ ७७ ॥

दयिते ! वदनत्विषां मिषादयि ! तेऽमी विलसन्ति केशराः।
अमी चालकवेशधारिणो मकरन्दस्पृहयालवोऽलयः ॥ ७८ ॥
अनिशं नयनाभिरामया रमया संवदिनो मुखस्य ते।
निशि निःसरदिन्दिरं कथं तुलयामः कलयाऽपि पङ्कजम् ? ॥ ७९ ॥
अङ्गैः सुकुमारतरैः सा कुसुमानां श्रियं हरति।
विकलयति कुसुमबाणो बाणालीभिर्मम प्राणान् ॥ ८० ॥
खिद्यति सा पथि यान्ती कोमलचरणा नितम्बभारेण।
खिद्यामि हन्त ! परितस्तदुपविलोकनेन विकलोऽहम् ॥ ८१ ॥

दयिते इति।—अयि दयिते ! प्रिये ! ते तव, वदनत्विषां मुख-कान्तीनां, मिषात् व्याजात्, अमी केशराः किञ्जल्काः, पद्मस्य इति भावः, "किञ्जल्कः केशरोऽस्त्रियाम्" इत्यमरः; विलसन्ति विस्फुरन्ति, अमी च मकरन्दस्पृहयालवः मधुलुब्धाः, अलयः भ्रमराः, अलकवेशधारिणः चूर्णकुन्तलवेशधराः, विलसन्तीत्यनुषङ्गः। अत्र प्रकृतवदनकान्तिप्रति-षेधेन केशरस्थापनात् तथा अलकप्रतिषेधेन भ्रमरस्थापनादपह्नुतिद्वयं, तथा च दर्पणः,—"प्रकृतं प्रतिषिध्यान्य-स्थापनं स्यादपह्नुतिः" इति ॥ ७८ ॥

अनिशमिति।—संवदिनः तुलनाकारिणः, वयमिति शेषः, अनिशं दिवारात्रमित्यर्थः, नयनाभिरामया नेत्रप्रीतिकर्य्या, ते तव, मुखस्य रमया लक्ष्म्या, श्रियेत्यर्थः, निशि रात्रौ, न तु दिवेत्यर्थः, निःसरन्ती निर्गच्छन्ती, इन्दिरा श्रीः यस्य यस्माद्वा तत् तादृशं, पङ्कजं कमलं, कथं कलयाऽपि लेशतः अपि, तुलयामः ? नैव तुलयाम इत्यर्थः। सुन्दरी वृत्तम्—"अयुजोर्यदि सौ जगौ युजोः सभरालगौ यदि सुन्दरी तदा" इति लक्षणात् ॥ ७९ ॥

अङ्गैरिति।—सा कान्ता, सुकुमारतरैः अतिसुकोमलैरित्यर्थः, अङ्गैः कुसुमानां पुष्पाणां, श्रियं कान्तिं, हरति चोरयति, कुसुमबाणः पुष्पेषुः कामः, बाणालीभिः कुसुमरूपैः शरसमूहैः, मम प्राणान् विकलयति व्यथयति। उपगीति वृत्तम् ॥ ८० ॥

खिद्यतीति।—कोमलचरणा मृदुलाङ्घ्रिः, सा पथि यान्ती गच्छन्ती सती, नितम्बभारेण खिद्यति खेदम् अनुभवति, हन्त ! विषादे, अहं तस्या

मथुरागमनोन्मुखे मुरारावसुभारार्त्तिभृतां व्रजाङ्गनानाम्।
प्रलयज्वलनायते स्म राका भवनाकाशमजायताम्बुराशिः ॥ ८२ ॥

केलीमन्दिरमागतस्य शनकैरालीरपास्येङ्गितैः
सुप्तायाः सरुषः सरोरुहदृशः संवीजनं कुर्वतः।
जानन्त्याऽप्यनभिज्ञयेव कपटव्यामीलिताक्ष्या सखि!
श्रान्ताऽसीत्यभिधाय वक्षसि तया पाणिर्ममासञ्जितः ॥ ८३ ॥

मान्थर्य्यमाप गमनं सह शैशवेन
रक्तं सहैव मनसाऽधरबिम्बमासीत्।
किञ्चाभवत् मृगकिशोरदृशो नितम्बः
सर्वाधिको गुरुरयं स मनोरथेन ॥ ८४ ॥

उपविलोकनेन समीपे दर्शनेन, विकलः विवशः सन्, परितः सर्वतः, खिद्यामि विषीदामि ॥ ८१ ॥

मथुरेति।—मुरारौ श्रीकृष्णे,मथुरायां मधुपूर्य्यां, गमनोन्मुखे गन्तुमुद्यते सति, असवः प्राणा एव, भाराः,दुर्वहत्वादिति भावः, तैः या आर्त्तिः पीड़ा, अतिभारवहनदुःखमित्यर्थः, तां बिभ्रतीति तादृशीनां, व्रजाङ्गनानां गोपिनीनां, राका पूर्णचन्द्राऽपि तिथिः, प्रलयज्वलनायते स्म प्रलयवह्निरिव आचरति स्म, भवनाकाशं गृहस्य शून्यस्थानमपि, अम्बुराशिः समुद्रः, अजायत, अश्रुजलपूर्णत्वादिति भावः। मालभारिणी वृत्तम् ॥ ८२ ॥

केलीति।—शनकैः निःशब्दमित्यर्थः,केलीमन्दिरं क्रीड़ागृहम्,आगतस्य इङ्गितैः सङ्केतैः, आलीः सखीगणान्, अपास्य अपसार्य्येत्यर्थः, सुप्तायाः निद्रितायाः, सरुषः प्रणयकुपितायाः, सरोरुहदृशः पङ्कजाक्ष्याः, कान्ताया इति शेषः, संवीजनं कुर्वतः मम वक्षसि तया कान्तया, जानन्त्याऽपि प्रियतमोऽयं मां वीजयतीति विदन्त्याऽपि, अनभिज्ञयेव अजानन्त्येव, कपटेन व्यामीलिते अक्षिणी यया तथोक्तया सत्या, सखि! श्रान्ताऽसि, वीजनकरणेनेति भावः, इति अभिधाय उक्त्वा, पाणिः करः, आसञ्जितः आरोपितः, स्थापित इत्यर्थः। शार्दूलविक्रीड़ितं वृत्तम् ॥ ८३ ॥

मान्थर्य्यमिति।—मृगकिशोरदृशः मृगशावाक्ष्याः,गमनं गतिः, शैशवेन

श्वासोऽनुमानवेद्यः शीतान्यङ्गानि निश्चला दृष्टिः।
तस्याः सुभग! कथेयं तिष्ठतु तावत् कथाऽन्तरं कथय॥ ८५॥
पाणौ कृतः पाणिरिलासुतायाः सस्वेद-कम्पो रघुनन्दनेन।
हिमाम्बुसङ्गानिलविह्वलस्य प्रभातपद्मस्य बभार शोभाम्॥ ८६॥
अरुणमपि विद्रुमदण्डं मृदुलतरञ्चापि किसलयं बाले!।
अधरीकरोति नितरां तवाधरो मधुरिमाऽतिशयात्॥ ८७॥

बाल्येन सह, माध्यस्थ्यं मन्दताम्, आप प्राप, शैशवमपगतं गतिश्च मन्थरा जातेत्यर्थः, अधरबिम्बं मनसा सहैव रक्तम् आसीत्, किञ्च, सः अयं नितम्बः मनोरथेन सह सर्वाधिकः गुरुः गौरववान्, अभवत्। अत्र सहोक्तिरलङ्कारः,—"सहार्थस्य बलादेकं यत्र स्यात् वाचकं द्वयोः। सा सहोक्तिर्मूलभूताऽतिशयोक्तिर्यदा भवेत्॥" इति। वसन्ततिलकं वृत्तम्॥ ८४॥

श्वास इति।—सुभग! हे वल्लभ! तस्यास्तव कान्ताया इत्यर्थः, श्वासः निश्वासः, अनुमानेन अनुभवविशेषेण, वेद्यः ज्ञेयः, न तु स्पष्टमिति भावः, अङ्गानि शीतानि शीतलानि, दृष्टिः निश्चला स्थिरेत्यर्थः, इयं कथा आलापः, तावत् तिष्ठतु, कथान्तरम् अन्यां कथां, कथय। अत्र तव विरहे सा मृतप्रायेति विशेषप्रतिपत्त्यर्थं निषेधाभासत्वादाक्षेपालङ्कारः, तथा च दर्पणः,—"वस्तुनो वक्तुमिष्टस्य विशेषप्रतिपत्तये। निषेधाभास आक्षेपो वक्ष्यमाणोक्तगो द्विधा॥" इति। गीति वृत्तम्॥ ८५॥

पाणाविति।—रघुनन्दनेन रामेण, पाणौ कृतः पाणिना गृहीतः, अत एव सस्वेद-कम्पः सत्त्वोद्रेकात् स्वेदकम्पाभ्यां सहित इत्यर्थः, इला पृथिवी, तस्याः सुता सीता तस्याः,पाणिः करः, हिमाम्बुसङ्गेन हिमशीतल-जलसंस्पर्शेन, अनिलेन वायुना च, विह्वलस्य व्याकुलस्य, प्रभातपद्मस्य प्रातःकालीनकमलस्य, शोभां श्रियं, बभार दधार। अन्येकस्य शोभां कथमन्यो वहत्विति पाणिपद्मयोः सादृश्यावगमान्निदर्शनालङ्कारः, तथा च दर्पणः,—"सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वाऽपि कुत्रचित्। यत्र बिम्बानुबिम्बत्वं बोधयेत् सा निदर्शना॥" इति। उपजाति वृत्तम्॥ ८६॥

अरुणमिति।—बाले हे मुग्धे! तव अधरः मधुरिमातिशयात्

नयने वहतो न खञ्जनानामिह नानाविधमञ्जने ! भयन्ते ? ।
मुखमेतु तुलां कथं सुशोभं सुदृशो भङ्गुरसम्पदोऽम्बुजस्य ? ॥८८॥
सुदृशो जितरत्नमालया सुरतान्तश्रमबिन्दुमालया ।
अलकेन च नीलकान्तिना विदधे काऽपि रुचिः परस्परम् ॥८९॥
परपुरुषदृष्टिजातवज्राहतिभीता हृदयं प्रियस्य सीता ।
अविशत् परकामिनीभुजङ्गीभयतः सत्वरमेव सोऽपि तस्याः ॥९०॥

माधुर्यातिरेकात्, अरुणामपि स्वभावरक्तामपि, विद्रुमदण्डं प्रवालयष्टिं, मृदुलतरम् अतिशयेन कोमलं, किसलयस्यापि नवपल्लवमपि, नितराम् अतिशयेन, अधरीकरोति तिरस्करोति । अत्रोपमेयस्योपमानादाधिक्यप्रतिपादनात् व्यतिरेकालङ्कारः, तथा च दर्पणः,—"आधिक्यमुपमेयस्योपमानान्न्यूनताऽथवा । व्यतिरेकः—॥" इति ॥ ८७ ॥

नयने इति ।—अञ्जने ! हे कान्ते ! इह संसारे, ते तव, नयने खञ्जनानां खञ्जरीटपक्षिणां, "खञ्जरीटस्तु खञ्जनः" इत्यमरः ; नानाविधं बहुतरमित्यर्थः, भयं वहतः नु ? जनयतः किम् ? इत्यर्थः, उत्प्रेक्षाऽलङ्कारः सुदृशः सुनयनायाः, तवेति शेषः, सुशोभं दिवारात्रसमशोभमिति भावः, मुखं भङ्गुरा अस्थिरा, रात्रौ शिशिरे चेति भावः, सम्पत् श्रीर्यस्य तादृशस्य, अम्बुजस्य कमलस्य, तुलां सादृश्यं, कथम् एतु ? प्राप्नोतु ? नैव एत्वित्यर्थः, अतुल्यकक्षत्वादिति भावः । अत्रापि व्यतिरेकालङ्कारः । मालभारिणी वृत्तम् ॥ ८८ ॥

सुदृश इति ।—सुदृशः सुनयनायाः, कान्ताया इति शेषः, जिता न्यक्कृता, रत्नमाला मुक्ताराजिरित्यर्थः यया तथाभूतया, सुरतान्ते सुरतक्रीड़ाऽवसाने, ये श्रमबिन्दवः परिश्रमोद्गतघर्मोदबिन्दवः, तेषां माला राजिः तया, तथा नीला असिता, कान्तिः यस्य तादृशेन अलकेन च चूर्णकुन्तलेन च, "अलकाश्चूर्णकुन्तलाः" इत्यमरः ; परस्परं काऽपि अनिर्वचनीया, रुचिः शोभा, विदधे धृता । सुन्दरी वृत्तम् ॥ ८९ ॥

परेति ।—परपुरुषाणां स्वाम्यतिरिक्तपुरुषाणां, दृष्टिः स्वस्मिन् नयनविक्षेप इत्यर्थः, सैव जाता आपतिता, वज्राहतिः कुलिशाघातः, तस्याः

जम्बोरश्रियमतिलङ्घ्य लीलयैव
व्यानम्रीकृतकमनीयहेमकुम्भौ।
नीलाम्भोरुहनयने ऽधुना कुचौ ते
स्पर्द्धेते किल कनकाचलेन सार्द्धम्॥ ९१॥

अङ्गानि दत्त्वा हेमाङ्गि ! प्राणान् क्रीणासि चेन्नृणाम्।
युक्तमेतन्न तु पुनः कोणं नयनयुग्मयोः॥ ९२॥

जितरत्नरुचां सदा रदानां सहवासेन परां मुदं दधानाम्।
विशदाधरौकसीति नासामधुना साहसशालि मौक्तिकं ते॥ ९३॥

सीता लक्ष्मी, सीता प्रियस्य कान्तस्य, रामस्येत्यर्थः, हृदयं, सोऽपि रामोऽपीत्यर्थः, पराः भार्य्याव्यतिरिक्ताः अन्याः, कामिन्यः नार्य्य एव, भुजगाः विषधर्य्यः सर्प्यः, ताभ्यो भयतः भयात्, सत्वरमेव शीघ्रमेव, तस्याः सीतायाः, हृदयम् अन्तरम्, अविशत् प्रविवेश, सीता रामं विना पुरुषान्तरं कदाऽपि मनसा न सस्मार, रामोऽपि सीतां विना नान्याः कामिनीरिति भावः॥ ९०॥

जम्बोरेति।—नीलाम्भोरुहनयने ! हे नीलोत्पलाक्षि ! ते तव, कुचौ स्तनौ, लीलयैव अवहेलयैव, जम्बोरस्य फलविशेषस्य, श्रियं शोभां, सादृश्यमिति यावत्, अतिलङ्घ्य अतिशय्य, व्यानम्रीकृतौ विशेषेण आनतीकृतौ, खर्वीकृताविति यावत्, कमनीयौ हेमकुम्भौ स्वर्णकलसौ याभ्यां तथाभूतौ, अधुना कनकाचलेन सुमेरुगिरिणा, सार्द्धं सह, स्पर्द्धेते किल? स्पर्द्धां कुरुतः किम्? इत्युत्प्रेक्षा। प्रहर्षिणी वृत्तम्॥ ९१॥

अङ्गानीति।—हेमाङ्गि ! हे गौराङ्गि ! अङ्गानि दत्त्वा चेत् यदि, नृणां मानवानां, प्राणान् क्रीणासि, एतत् अङ्गदानेन प्राणक्रयण-मित्यर्थः, युक्तं सङ्गतं, पुनः किन्तु, नयनयुग्मयोः नयनयोः, कोणं प्रान्तं, कटाक्षदर्शनमिति भावः, दत्त्वा न तु नैव, प्राणक्रयणं युक्तमिति शेषः। अनुष्टुप् वृत्तम्॥ ९२॥

जितेति।—जिता न्यक्कृता, रत्नानां मुक्तानामिति यावत्, रुक् कान्तिः यैः तथाभूतानां, रदानां दन्तानां, सदा सर्व्वदैव, सहवासेन

निभाल्य भूयो निजगौरिमाणं मा नाम मानं सहसैव यासीः।
गृहे गृहे पश्य तवाङ्गवर्णा मुग्धे ! सुवर्णावलयो लुठन्ति ॥९४॥

करिकुम्भतुलामुरोजयोः क्रियमाणां कविभिर्विशृङ्खलैः।
कथमालि ! शृणोषि सादरं विपरीतार्थविदो हि योषितः?॥९५॥

तिरस्कृतो रोषवशात् परिष्वजन्
प्रियो मृगाक्ष्या शयितः पराङ्मुखः।
किं दुःखितोऽसाविति कान्दिशीकया
कदाचिदाचुम्ब्य चिराय सस्वजे ॥ ९६ ॥

सङ्गेन, परां महतीं, मुदम् आनन्दं, दधानां धारयन्तीं, ते तव, नासाम् अधुना साहसमालि अशक्याध्यवसायवत्, मौक्तिकं विशदात् वैशद्यादित्यर्थः, स्वच्छत्वादिति यावत्, भावप्रधानो निर्देशः; अधरीकरोति अधरीकर्त्तुमिच्छति, एतत् केवलं साहसमात्रं, न पुनः शक्यमिति भावः। उपेन्द्रवज्रा वृत्तम् ॥ ९३ ॥

निभाल्येति।—हे मुग्धे ! निजं गौरिमाणं गौरत्वं, भूयोऽतिशयेन, निभाल्य अवलोक्य, सहसैव हठादेव, मानं गर्वं, मा नाम यासीः, नैव गर्वं कुर्वित्यर्थः, पश्य अवलोकय, गृहे गृहे प्रतिगृहं, तव अङ्गवर्णाः अङ्गसमानवर्णाः, सुवर्णावलयः काञ्चनराजयः, लुठन्ति वर्त्तन्ते इत्यर्थः। उपजाति वृत्तम् ॥ ९४ ॥

करीति।—आलि ! हे सखि ! विशृङ्खलैः शृङ्खलारहितैः, निरङ्कुशैरिति यावत्, कविभिः काव्यरचयितृभिः क्रियमाणां विधीयमानाम्, उरोजयोः कुचयोः, करिकुम्भतुलां गजकुम्भसादृश्यं, कथं सादरं सगौरवं, शृणोषि ? हि यतः, योषितः स्त्रियः, विपरीतम् अर्थं विदन्तीति तथोक्ताः, तथा च करिकुम्भावेव उरोजतुलामर्हत इत्यर्थे योषिद्भिर्ज्ञातव्ये तद्विपरीतार्थबोधेन न तवात्रादरो युक्तः कविवाक्ये इति भावः। सुन्दरी वृत्तम् ॥ ९५ ॥

तिरस्कृत इति।—मृगाक्ष्या हरिणलोचनया, कान्तया इति शेषः, कदाचित् रोषवशात् प्रणयकोपवशात्, तिरस्कृतः भर्त्सितः, अवधीरितः

चेलाञ्चलेनाननशीतरश्मिं संवृण्वतीनां हरिदृश्वरीणाम्।
व्रजाङ्गनानां स्मरजातकम्पादकाण्डसम्पातमियाय नीवी ॥८७॥
अधरेण समागमाद्रदानाम् अरुणिम्ना पिहितोऽपि शुभ्रभावः।
हसितेन सितेन पक्ष्मलाक्ष्याः पुनरुल्लासमवाप जातपक्षः ॥८८॥

इति यावत्, प्रियः कान्तः, परिष्वजन् आलिङ्गन्, कान्तामिति भावः, पराङ्मुखः विमुखः सन्, शयितः, ततः असौ दुःखितः किम्? इति एवं विचिन्त्य, क्रान्दिशीकया भयार्त्तया सत्या, "कान्दिशीको भयद्रुतः" इत्यमरः; आचुम्ब्य सम्यक् चुम्बित्वा, चिराय चिरं व्याप्येत्यर्थः, सस्वजे आलिङ्गितः। वंशस्थविलं वृत्तं—"वदन्ति वंशस्थविलं जतौ जरौ" इति लक्षणात् ॥ ८६ ॥

चेलेति।—हरिं कृष्णं, दृष्टवत्य इति हरिदृश्वर्यः तासां, हरिं दृष्टवतीनामित्यर्थः, अत एव चेलाञ्चलेन वसनप्रान्तेन, आननशीतरश्मिं मुखचन्द्रं, संवृण्वतीनाम् आच्छादयन्तीनां, लज्जावशादिति भावः, व्रजाङ्गनानां गोपनारीणां, नीवी वसनग्रन्थिः, स्मरेण कामेन हेतुना, जातः यः कम्पः वेपथुः तस्मात् हेतोः, सत्त्वोद्रेकजनितादिति भावः, अकाण्डे सहसा, सम्पातं च्युतिम्, इयाय प्राप, कृष्णदर्शनजनितकामावेशात् व्रजाङ्गनाः सहसा विवसना जाता इति भावः। उपजातिवृत्तम् ॥ ८७ ॥

अधरेणेति।—जातपक्षः सुपक्षं रदानां तेषां शुभकान्तीनां, समागमात् सहयोगात्, सान्निध्यवशादिति भावः, शुभ्रभावः प्राप्तश्वेतिमा सन्, अधरेण अरुणिम्ना रक्ततया, पिहितो वर्णान्तरमापादितोऽपि, सितेन हसितेन पुनरुल्लासमवाप प्राप्तवान्। यद्वा—पक्ष्मलाक्ष्याः घनकृष्णपक्ष्मविशिष्टलोचनायाः, कान्ताया इति शेषः, रदानां दन्तानां, शुभ्रभावः शुभ्रता, अधरेण रक्तवर्णेनेति भावः, समागमात् संयोगात्, अरुणिम्ना अधरस्य आरक्त्येन, पिहितोऽपि आच्छन्नोऽपि, रक्ततां गतोऽपि इत्यर्थः, पुनः सितेन शुभ्रेण, हसितेन हास्येन, जातपक्षः ससहायः सन्, उभयोरेव शुभ्रत्वादिति भावः, उल्लासं विकाशम्, औज्ज्वल्यमिति यावत्, अवाप प्राप। मालभारिणी वृत्तम् ॥ ८८ ॥

सरसिरुहोदरसुरभावधरितबिम्बाधरे मृगाक्षि ! तव ।
वदने शुचिमणिरदने ताम्बूलं केन लक्षयेम वयम् ? ॥ ९९ ॥
शयिता सविधेऽप्यनीश्वरा सफलीकर्त्तुमहो ! मनोरथान् ।
दयिता दयिताननाम्बुजं दरमीलन्नयना निरीक्षते ॥ १०० ॥
किमिति कृशाऽसि ? कृशोदरि ! किं तव परकीयवृत्तान्तैः ? ।
कथय तथाऽपि मुदे मम कथयिष्यति पथिक ! तव जाया ॥१०१॥

सरसिरुहेति ।—सरसिरुहं पद्मं, तस्य उदरं गर्भः, तस्य सुरभेर्भावः सुरभं सौरभमित्यर्थः, पक्षेऽनिन्नावानाद्यवो वृद्धिः, तेन अवधरितः पूर्णः, बिम्बमिव अधरो यस्याः तत्सम्बुद्धौ, हे मृगाक्षि ! यद्वा—हे मृगाक्षि ! सरसिरुहोदरवत् सुरभौ सुगन्धिनि, अधरितं न्यक्कृतं, बिम्बम् ओष्ठोपमाफलविशेषो येन तादृशः अधरः यत्र तथाभूते, वदने इत्यस्य विशेषणम् ; शुचिः शुभ्रः, मणि मौक्तिकं, तद्वत् रदना दन्ता यस्मिन् तादृशे, तव वदने वयं केन कथं, ताम्बूलं लक्षयेम ? नैव लक्षयितुं शक्नुम इत्यर्थः, स्वतस्ताम्बूलरागस्य सत्त्वादिति भावः । गीतिवृत्तम् ॥ ९९ ॥

शयितेति ।—सविधे समीपे, पार्श्वे इत्यर्थः, शयिताऽपि मनोरथान् अभिलाषान्, प्रियस्येति भावः, सफलीकर्त्तुं पूरयितुम्, अनीश्वरा अक्षमा, अशक्तेत्यर्थः, मुग्धत्वादिति भावः, दयिता कान्ता, दरेण भयेन, मीलती निमीलनं प्राप्नुवती, नयने यस्याः तथाभूता, सङ्कुचन्नेत्रा सतीत्यर्थः, दयितस्य प्रियस्य, आननाम्बुजं मुखपद्मं, निरीक्षते अवलोकयति । सुन्दरी वृत्तम् ॥ १०० ॥

किमिति ।—कृशोदरि ! हे क्षीणमध्ये ! किमिति कथं, कृशा क्षीणा, असि ? इति नायकोक्तिः । तव परकीयवृत्तान्तैः परस्त्रीव्यापारैः, श्रुतैरिति शेषः, किम् ? न किमपि प्रयोजनमस्तीत्यर्थः, इति नायिकोक्तिः । तथाऽपि वृत्तान्तस्य परकीयत्वेऽपि, मम मुदे प्रीतये, कथय वद, इति नायकोक्तिः । हे पथिक ! तव जाया प्रिया, या तव प्रवासखिन्नेति भावः, कथयिष्यति, मम कार्श्यवृत्तान्तमिति शेषः, इति नायिकोक्तिः । उपगीति वृत्तम् ॥ १०१ ॥

वदनारविन्दसौरभादिन्दिरेषु निपतत्सु ।
मय्यधरार्थिनि सुदृशो दृशो जयन्त्यतिरुषा परुषाः ॥ १०२ ॥

इति श्रीमत्पण्डितराजजगन्नाथविरचिते भामिनीविलासे
शृङ्गारो नाम द्वितीयो विलासः ।

## तृतीयविलासः ।

दैवे पराग्वदनशालिनि हन्त ! जाते
याते च सम्प्रति दिवं प्रति बन्धुरत्ने ।
कस्मै मनः ! कथयितासि निजामवस्थाम् ?
कः शीतलैः शमयिता वचनैस्तवाधिम् ? ॥ १ ॥

वदनेति ।—वदनमेवारविन्दं पद्मं, तस्य सौरभात् इन्दिरेषु भ्रमरेषु, निपतत्सु समन्तात् आगच्छत्सु सत्सु, अधरार्थिनि अधरपिपासौ,मयि सुदृशः सुनयनायाः कान्तायाः, अतिरुषा अतिकोपेन, परुषाः कठोराः, सुतीव्रा इत्यर्थः, दृशः दृष्टयः, जयन्ति सर्वोत्कर्षेण वर्त्तन्ते ; भ्रमरबाधानिवारणार्थं व्यापृतायास्तस्यास्तदानीमेवाधरपानप्रवृत्तं मां प्रति सुतरां कोपदृष्टयः सम्भवन्ति, किन्तु ता अतीवमनोहारिण्य इति निष्कर्षः ॥ १०२ ॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्यविरचिता भामिनीविलासस्य
द्वितीयविलासव्याख्या समाप्ता ।

---

दैवे इति ।—हन्त ! खेदे, दैवे विधौ, "दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः"इत्यमरः ; पराग्वदनं वैमुख्यं, तेन शालते शोभते इति पराग्वदनशालिनि विमुखे इत्यर्थः, जाते सति, तथा सम्प्रति इदानीं, बन्धुरत्ने सुहृत्प्रवरे, दिवं स्वर्गं, प्रति याते गते च, हे मनः ! कस्मै जनाय, निजामवस्थां कथयितासि ? वक्तासि ? कस्यापि जनस्य समीपे

प्रत्युद्गता सविनयं सहसा पुरेव
स्मेरैः स्मरस्य सचिवैः सहसाऽवलोकैः ।
मामद्य मञ्जुरचनैर्वचनैश्च बाले !
हा ! लेशतोऽपि न कथं शिशिरीकरोषि ? ॥ २ ॥

सर्वेऽपि विस्मृतिपथं विषयाः प्रयाता
विद्याऽपि खेदकलिता विमुखी बभूव ।
सा केवलं हरिणशावकलोचना मे
नैवापयाति हृदयादधिदेवतेव ॥ ३ ॥

निर्वाणमङ्गलपदं त्वरया विशन्त्या
मुक्ता दयावति ! दयाऽपि किल त्वयाऽसौ ? ।

ख्या दशा नैव वाच्येत्यर्थः, को जनः, शीतलैः सान्त्वनासूचकैरिति भावः, वचनैः तव आधिं मानसीं व्यथां, शमयिता ? निवारयिता ? न च कोऽपि तवाधिं शमयिष्यतीत्यर्थः । वसन्ततिलकं वृत्तम् ॥ १ ॥

प्रत्युद्गतेति ।—बाले ! हे मुग्धे ! पुरेव पूर्ववत्, सहसा अकस्मात्, सविनयं विनयपुरःसरं, प्रत्युद्गता प्रत्युत्तिष्ठन्ती सती, स्मरस्य कामस्य, सचिवैः सहायैः, उद्दीपकैरिति यावत्, स्मेरैः मृदुहाससहितैः, सहसा अवलोकैः दृष्टिपातैः, मञ्जुरचनैः मनोहररचनावद्भिः, वचनैश्च माम् अद्य लेशतोऽपि अल्पमपीत्यर्थः, कथं केन हेतुना, न शिशिरीकरोषि ? न शीतलीकरोषि ? न प्रीणयसि ? इत्यर्थः, हा ! खेदे । मृतां प्रियाम् उद्दिश्योक्तिः । वसन्ततिलकं वृत्तम् ॥ २ ॥

सर्वे इति ।—सर्वेऽपि समस्ता अपि, विषयाः भोग्यवस्तूनि, विस्मृतिपथं विस्मरणविषयतामित्यर्थः, प्रयाताः गताः, खेदेन परिश्रमेण, कलिता अभ्यस्तेत्यर्थः, विद्याऽपि विमुखी बभूव, विशिष्टं ज्ञानं तिरोहितमिति भावः, केवलं सा हरिणशावकलोचना मृगशावाक्षी, अधिदेवतेव हृदयाधिष्ठात्री देवीव, मे मम, हृदयात् चित्तात्, नैव अपयाति नैव अपसरति, मृतां भार्य्यामुद्दिश्योक्तिः । वसन्ततिलकं वृत्तम् ॥ ३ ॥

यन्मां न भामिनि ! निभालयसि प्रभाते
नीलारविन्दमदभङ्गपदैः कटाक्षैः ? ॥ ४ ॥

धृत्वा पदस्खलनभीतिवशात् करं मे
याऽऽरूढवत्यसि शिलाशकलं विवाहे ।
सा मां विहाय कथमद्य विलासिनि ! द्याम्
आरोहसीति ? हृदयं शतधा प्रयाति ॥ ५ ॥

निर्दूषणा गुणवती रसभावपूर्णा
सालङ्कृतिः श्रवणमङ्गलवर्णराजिः ।

---

निर्वाणेति ।—हे दयार्वति ! त्वरया शीघ्रम्, अकाले इति भावः, निर्वाणं मुक्तिरेव, मङ्गलपदं श्रेयःस्थानं, विशन्त्या प्रविशन्त्या, मुक्तिपदं गच्छन्त्या इत्यर्थः, त्वया असौ मदनुभूतपूर्वेति भावः, दयाऽपि मुक्ता किल ? त्यक्तैव ? यत् यस्मात्, भामिनि ! हे प्रिये ! प्रभाते प्रातःकाले, नीलारविन्दस्य नीलोत्पलस्य, मदो गर्वः, तस्य भङ्गपदैः भञ्जनस्थानैरित्यर्थः, पराजयकारणैरिति यावत्, कटाक्षैः मां न निभालयसि ? नावलोकयसि ? मयो मृतां कान्तां प्रत्युक्तिः । वसन्ततिलकं वृत्तम् ॥ ४ ॥

धृत्वेति ।—हे विलासिनि ! या त्वं विवाहे पाणिग्रहणसमये, पदस्खलनात् चरणच्युतेः, भीतिर्भयं, तद्वशात् तदधीनत्वात्, मे मम, करं धृत्वा अवलम्ब्य, शिलाशकलं शिलाखण्डं, तत्कालारोहणयोग्यं माङ्गलिकमिति भावः, आरूढवती आरोहणं कृतवती, असि, सा त्वम् अद्य मां विहाय परित्यज्य, निरालम्बमेनेति भावः, कथं केन प्रकारेण, द्यां स्वर्गम्, आरोहसि ? इति एतत्, विचिन्त्येति शेषः, हृदयं शतधा प्रयाति विदीर्यते इत्यर्थः । मृतां कान्तामुद्दिश्य नायकस्य शोकोक्तिः । वसन्ततिलकं वृत्तम् ॥ ५ ॥

निर्दूषणेति ।—निर्दूषणा दोषरहिता, श्रुतिकट्वादिदोषवर्जिता च, गुणवती दयादाक्षिण्यादिगुणशालिनी, ओजःप्रसादादिगुणसमन्विता च, रसैः शृङ्गारादैः, भावैर्विलासविशेषैः, देवादिरतिविशेषैश्च, पूर्णा, सालङ्कृतिः अलङ्कारविभूषितेत्यर्थः, अलङ्कारैरनुप्रासोपमाद्यैः सहिता च, श्रवण-

सा मामकीनकवितेव मनोऽभिरामा
रामा कदाऽपि हृदयान्मम नापयाति ॥ ६ ॥
चिन्ता शशाम सकलाऽपि सरोरुहाणाम्
इन्दोश्च बिम्बमसमं सुषमामयासीत् ।
अभ्युद्गतः कलकलः किल कोकिलानां
प्राणप्रिये ! यदवधि त्वमितो गताऽसि ॥ ७ ॥
सौदामनीविलसितप्रतिमान् अकाण्डे
दत्त्वा कियन्त्यपि दिनानि महेन्द्रभोगान् ।
मन्त्रोज्झितस्य नृपतेरिव राज्यलक्ष्मी-
र्भाग्यच्युतस्य करतो मम निर्गताऽसि ॥ ८ ॥

मङ्गलानि श्रुतिसुखा इत्यर्थः,वर्णानां वचनानाम्, अक्षराणाञ्च, वाक्यानाञ्च वा, राजयः समूहाः यस्याः यस्यां च सा तथोक्ता, मामकीनकवितेव मत्सम्बन्धिनी कवितेव, मनोऽभिरामा मनोहारिणी, सा रामा प्रिया, कदाऽपि मम हृदयात् न अपयाति नापगच्छति, सततमेव तां रामां चिन्तयामीति भावः। उपमाऽलङ्कारः। वसन्ततिलकं वृत्तम् ॥ ६ ॥

चिन्तेति।—प्राणप्रिये ! हे जीवितप्रीतिकरि ! यदवधि यत आरभ्य, त्वम् इतः मत्सकाशादित्यर्थः, गताऽसि प्रस्थिताऽसि, दिवं प्रयाताऽसीति भावः, तदवधि सरोरुहाणां पद्मानां, सकलाऽपि चिन्ता त्वत्तः पराजय-विषयिणीति भावः, शशाम शान्तिं गतेत्यर्थः, इन्दोश्चन्द्रस्य, बिम्बं मण्डलञ्च, असमं निरुपमां, सुषमां परमां शोभां, "सुषमा परमा शोभा" इत्यमरः ; अयासीत् प्राप, त्वन्मुखरूपप्रतिपक्षाभावादिति भावः, कोकिलानामपि कलकलः मधुरास्फुटध्वनिः, उद्गतः प्रादुर्भूतः किल, प्राक् त्वद्वचनानां कोकिलरवाभिभावकत्वात् तत्कलकलः न प्रादुरासीदिति भावः। मृतां कान्तामुद्दिश्य खेदोक्तिः। वसन्ततिलकं वृत्तम् ॥ ७ ॥

सौदामनीति।—हे प्रिये ! कियन्त्यपि कतिचिदपि, अल्पसङ्ख्याकानीति भावः, दिनानि, अत्यन्तसंयोगे द्वितीया ; सौदामन्या विद्युतः, विलसितं विस्फुरणं, क्षणिकमिति भावः, तत्प्रतिमान् तत्तुल्यान्, महेन्द्रभोगान्

केनापि मे विलसितेन समुद्गतस्य
कोपस्य किन्नु करभोरु ! वशंवदाऽभूः ? ।
यस्मां विहाय सहसैव पतिव्रताऽपि
याताऽसि मुक्तरमणीसदनं विदूरम् ? ॥ ९ ॥

काव्यात्मना मनसि पर्य्यणमन् पुरा मे
पीयूषसारसदृशास्तव ये विलासाः ।
तानन्तरेण रमणीरमणीयशीला
चेतोहरा सुकविता भविता कथं नः ? ॥ १० ॥

इन्द्राधिपत्यमुखानीति यावत्, दत्त्वा मन्त्रोज्झितस्य त्यक्तमन्त्रशक्तेः, मन्त्रणाविरहितस्येत्यर्थः, दुर्मन्त्रिण इति यावत्, नृपतेः राज्ञः, राज्य-लक्ष्मीरिव भाग्यच्युतस्य हतभाग्यस्य, मम करतः हस्तात्, अकाण्डे असमये एव, निर्गताऽसि प्रस्थिताऽसि । उपमाऽलङ्कारः । वसन्ततिलकं वृत्तम ॥ ८ ॥

केनेति ।—हे करभोरु ! मे मम, केनापि अनिर्वाच्येन, अविज्ञातेन वा, विलसितेन चेष्टितेन, समुद्गतस्य सञ्जातस्य, कोपस्य वशंवदा आयत्ता, अभूः किं नु ? यत् यस्मात्, पतिव्रताऽपि साध्वी सत्यपि, मां सहसा विहाय परित्यज्य, विदूरमतिदूरस्थं, मुक्तानां मुक्तदेहानां, रमणीनां नारीणां, सदनं स्थानं, साध्वीभोग्यं स्त्री-लोकविशेषमित्यर्थः, याताऽसि ? वसन्ततिलकं वृत्तम् ॥ ९ ॥

काव्येति ।—हे प्रिये ! पुरा पूर्वं, पीयूषसारसदृशाः सुधासारसमाः, तव ये विलासाः विभ्रमाः, मे मम, मनसि काव्यात्मना काव्यस्वरूपेण, पर्य्यणमन् परिणता आसन्, तान् विलासान्, अन्तरेण विना, रमणीनां नारीणां, रमणीयं मनोहरं, शीलं स्वभावः, चरितमिति यावत् यस्यां तादृशी, "शीलं स्वभावे सद्वृत्ते" इत्यमरः ; चेतोहरा मनोहारिणी, नः अस्माकं, सुकविता शोभना काव्यरचना, कथं केन प्रकारेण, भविता ? उद्भविष्यति ? नैव भवितेत्यर्थः, तव 'विलासानादर्श्य अहं स्त्रीणां चरितं वर्णयामि, तत्तु इदानीं तव अदर्शनात् पूर्वानुभूतस्य च विस्मरणात् कथ भविष्यति ? इति भावः । वसन्ततिलकं वृत्तम् ॥ १० ॥

या तावकीनमधुरस्मितकान्तिकान्ते
भूमण्डले विफलतां कविषु व्यतानीत्।
सा कातराक्षि! सहसा त्वयि यातवत्यां
राकाऽधुना वहति वैभवमिन्दिरायाः ॥ ११ ॥

मन्दस्मितेन सुधया परिषिच्य या मां
नेत्रोत्पलैर्विकसितैरनिशं समीजे।
सा नित्यमङ्गलमयी गृहदेवता मे
कामेश्वरी हृदयतो दयिता न याति ॥ १२ ॥

भूमौ स्थिता रमण! नाथ! मनोहरेति
सम्बोधनैर्यमधिरोपितवत्यसि द्याम्।

येति।—तव इदं तावकीनं, यत् मधुरं स्मितं मृदुहसितं, तस्य कान्तिः शोभा, तया कान्ते रमणीये, भूमण्डले अस्मिन् जगति, या राका पौर्णमासी रात्रिः, कविषु विषयेषु विफलतां वैफल्यं, त्वत्स्मितस्यैव तत्कार्य्यकारित्वेन स्वस्यानर्थक्यमित्यर्थः, व्यतानीत् विस्तारयामास, प्रापेत्यर्थः, कातराक्षि! हे विषादव्याकुललोचने! रोगयन्त्रणात इति भावः, अधुना सा राका त्वयि सहसा यातवत्यां गतवत्यां सत्यां, स्वर्गमिति शेषः, इन्दिरायाः श्रियाः, "लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरिप्रिया। इन्दिरा लोकमाता मा क्षीराब्धितनया रमा ॥" इत्यमरः; वैभवं समृद्धिं, वहति धारयति, शोभते इति भावः। वसन्ततिलकं वृत्तम् ॥ ११ ॥

मन्देति।—या त्वं, मन्दस्मितेन ईषद्धास्येन, तद्रूपया इत्यर्थः, सुधया पीयूषेण, प्रीतिकरत्वेन अमृततुल्येन स्मितेनेत्यर्थः, माम् अनिशं सततं, परिषिच्य स्नपयित्वा, विकसितैर्नेत्रोत्पलैः नयनरूपकुवलयैः, समीजे अर्चितवती; सम: यजेर्लिट्; नित्यमङ्गलमयी सततं मङ्गलस्वरूपिणी, गृहदेवता गृहस्य अधिष्ठात्री देवी, कामेश्वरी अभिलाषपूरयित्री, सा दयिता प्रियतमा, मे मम, हृदयतः अन्तःकरणात्, न याति सर्वदा स्मर्य्यते इत्यर्थः। वसन्ततिलकं वृत्तम् ॥ १२ ॥

स्वर्गं गता कथमिव क्षिपसि त्वमेण-
शावाक्षि! हा! धरणिधूलिषु मामिदानीम्? ॥१३॥
लावण्यमुज्ज्वलमपास्ततुलञ्च शीलं
लोकोत्तरं विनयमर्थमयं नयञ्च।
एतान् गुणानशरणानथ नाथ छित्त्वा
हा हन्त! सुन्दरि! कथं त्रिदिवं गताऽसि? ॥१४॥

भूमाविति।—भूमौ भूलोके, स्थिता, या त्वमिति शेषः, रमण! आनन्ददायक! नाथ! प्रभो! मनोहर! चेतोहर! इति एवम्प्रकारैः, सम्बोधनैः सम्बोधनवाक्यैः, यं मां, द्यां स्वर्गम्, अधिरोपितवत्यसि आरोहितवत्यसि, तादृशेन वाक्येन यं मां स्वर्गसुखमन्वभावय इत्यर्थः; इ-रुहिर्गत्युपसर्जनार्थतया गत्यर्थत्वात् प्रयोज्यकर्त्तुः कर्मत्वम्; एणशावाक्षि! हे बालकुरङ्गलोचने! सा त्वम् इदानीम् अधुना, स्वर्गं गता सती, धरणिधूलिषु मां कथमिव केन प्रकारेण, क्षिपसि? पूर्वं भूमिस्थयाऽपि उत्कृष्टस्थानासादनं कृतम्, इदानीमुत्कृष्टस्थया अत्युत्कृष्टस्थाना-सादनमुचितं, किन्तु तदविधाय अधरस्थाने क्षेपणं नितान्तमनुचितं तवेत्यर्थः। त्वद्विरहे धरणौ पतित्वा रोदिमीति ध्वन्यते। वसन्ततिलकं वृत्तम् ॥ १३ ॥

लावण्यमिति।—हे सुन्दरि! उज्ज्वलं दीप्तं, लावण्यं "मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते॥" इत्युक्तलक्षणकान्तिविशेषः, अपास्ता निरस्ता, तुला सादृश्यं यस्य तथाभूतं, शीलं सुचरितं, लोकोत्तरम् अलौकिकं, विनयं शिष्टाचारम्, अर्थमयं सार्थकं, नयञ्च नीतिञ्च, गार्हस्थ्योचितनियमञ्चेत्यर्थः, अशरणान् अनाश्रयान्, त्वदभावादिति भावः, एतान् गुणान् अथ नाथ, अशरण-मिति शेषः, छित्त्वा त्यक्त्वा, कथं केन प्रकारेण, त्रिदिवं स्वर्गं, गताऽसि? प्रस्थिताऽसि? हा हन्तेति खेदातिशयसूचकं पदद्वयम्। वसन्ततिलकं वृत्तम् ॥ १४ ॥

कान्त्या सुवर्णवरया परया च शुद्ध्या
नित्यं स्विकाः खलु शिखाः परितः क्षिपन्तीम् ।
चेतोहरामपि कुशेशयलोचने ! त्वां
जानामि कोपकलुषो दहनो ददाह ॥ १५ ॥

कर्पूरवर्त्तिरिव लोचनतापहन्त्री
फुल्लाम्बुजस्रगिव कण्ठसुखैकहेतुः ।
चेतश्चमत्कृतिपदं कवितेव रम्या
नम्या नरीभिरमरीव हि सा विरेजे ॥ १६ ॥

स्वप्नान्तरेऽपि खलु भामिनि ! पत्युरन्यं
या दृष्टवत्यसि न कञ्चन साभिलाषम् ।

कान्त्येति ।—कुशेशयलोचने ! हे कमलाक्षि ! चेतोहरामपि सर्वजनमनोहारिणीमपि, सुवर्णवरया सुवर्णादप्युत्कृष्टया, कान्त्या प्रभया, परया अत्युत्कृष्टया, शुद्ध्या दोषराहित्येन च, स्विकाः स्वकीयाः, दहनस्येत्यर्थात्, शिखाः ज्वालाः,कान्ति-शुद्धिविशिष्टा इति भावः,क्षिपन्तीमभिभवन्तीं, त्वां कोपकलुषः स्वकान्ति-शुद्धिभ्याम् अभिभवजनितक्रोधेन प्राप्तेर्ष्यः, दहनः अग्निः, ददाह भस्मीचकार, इति जानामि उत्प्रेक्षे । वसन्ततिलकं वृत्तम् ॥ १५ ॥

कर्पूरेति ।—कर्पूरवर्त्तिः कर्पूरचूर्णमिश्रितशलाकेव, कर्पूरनिर्मिताञ्जनवर्त्तिरिव इति वा, सा हि नेत्रार्पिता नेत्रतापं हन्तीति वैद्यकप्रसिद्धं, लोचनतापहन्त्री नेत्रपीड़ानाशिनी,नेत्रप्रीतिकरीति यावत्,फुल्लाम्बुजस्रगिव विकसितपद्ममालेव, कण्ठसुखस्य कण्ठालिङ्गनसुखस्य, गलदेशे धारणजनितानन्दस्येत्यर्थः, एकहेतुः एकमात्रकारणं, चेतसः मनसः, चमत्कृतिपदम् आनन्दविशेषास्पदं, कवितेव रम्या मनोहारिणी, सा दयिता, नरीभिः नरजातिस्त्रीभिः, नम्या नमस्या, अमरीव देवाङ्गना इव, विरेजे शुशुभे । नरीत्यत्र नर-शब्दात् जातौ ङीप् । नृशब्दात्तु निपातनात् नारीति विशेषः । उपमाऽलङ्काराणां संसृष्टिः । वसन्ततिलकं वृत्तम् ॥ १६ ॥

सा सम्प्रति प्रचलिताऽसि गुणैर्विहीनं
प्राप्तुं कथं कथय हन्त! परं पुमांसम्? ॥ १७ ॥
रीतिं गिराममृतवृष्टिकिरां त्वदीयां
तामाकृतिं कृतिवरैरभिनन्दनीयाम्।
लोकोत्तरामथ कृतिञ्च सुधारसार्द्रां
स्तोतुं न कस्य समुदेति मनःप्रसादः? ॥ १८ ॥

इति श्रीमत्पण्डितराजजगन्नाथविरचिते भामिनीविलासे
करुणो नाम तृतीयो विलासः।

स्वप्नेति।—हे भामिनि! या त्वं, स्वप्नान्तरेऽपि स्वप्नावस्थायामपि, पत्युरन्यं भर्त्तृव्यतिरिक्तं, कञ्चन, पुमांसमिति शेषः, साभिलाषं सतृष्णं यथा तथा, न दृष्टवती नावलोकितवती, असि, हन्तेति खेदे, सा त्वं सम्प्रति अधुना, गुणैः विनयादिभिः, सत्त्वरजस्तमःसंज्ञकगुणत्रयेण च, विहीनं शून्यं, निर्गुणं गुणातीतञ्च, परमन्यं प्रधानञ्च, पुमांसं पुरुषं, परपुरुषं परमपुरुषञ्च, प्राप्तुं कथं केन प्रकारेण, प्रचलिताऽसि याताऽसि, कथय? किमेतत् तवोचितमिति शेषः, मां परित्यज्य साध्व्यास्तव परपुरुषदर्शनमप्यनुचितं, किमुत तत्प्राप्त्यर्थं गमनमिति भावः। वसन्ततिलकं वृत्तम् ॥ १७ ॥

रीतिमिति।—अमृतवृष्टिं किरति वर्षतीति तथोक्तां सुधावर्षिणीमित्यर्थः, तव इयं त्वदीया त्वत्सम्बन्धिनी तां, गिरां वाचां, रीतिं विन्यासपद्वीं, कृतिवरैः कुशलश्रेष्ठैः, रूपविचारदक्षैः सहृदयैरित्यर्थः, अभिनन्दनीयां प्रशंसनीयां, ताम् आकृतिञ्च, अथ किञ्च, लोकोत्तराम् अलौकिकीं, सुधारसेन अमृतरसेन, आर्द्रां सिक्तां तां, कृतिं रचनाविशेषमित्यर्थः, त्वदीयामिति शेषः, स्तोतुं प्रशंसितुं, कस्य जनस्य, मनःप्रसादः चित्ततोषः, न समुदेति? न समुत्पद्यते? अपि तु सर्वस्यैव समुदेतीत्यर्थः। वसन्ततिलकं वृत्तम् ॥ १८ ॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्यविरचिता भामिनीविलासस्य
तृतीयविलासव्याख्या समाप्ता।

# चतुर्थविलासः ।

विशालविषयाटवीवलयलग्नदावानल-
प्रसृत्वरशिखावलीविकलितं मदीयं मनः ।
अमन्दमिलदिन्दिरे निखिलमाधुरीमन्दिरे
मुकुन्दमुखचन्दिरे चिरमिदं चकोरायताम् ॥ १ ॥
अये ! जलधिनन्दिनीनयननीरजालम्बन !
ज्वलज्ज्वलनजित्वरज्वरभरत्वराभङ्गुरम् ।
प्रभातजलजोन्नमद्गरिमगर्वसर्वङ्कषैः
जगत्त्रितयरोचनैः शिशिरयाशु मां लोचनैः ॥ २ ॥

विशालेति ।—विशालं बृहत्, यत् विषय एव अटवीवलयम् अरण्य-मण्डलं, तत्र लग्नः संसक्तः, प्रज्वलित इत्यर्थः, यो दावानलः तस्य प्रसृत्वराभिः प्रसरन्तीभिः, शिखावलीभिः ज्वालासमूहैः, विकलितं विपर्य्यस्तं, मदीयम् इदं मनः निखिलानां सर्वासां, माधुरीणां माधुर्य्याणां, मन्दिरं निलयः तस्मिन्, अमन्दं परिपूर्णं यथा तथा, मिलन्ती सङ्गच्छन्ती, इन्दिरा लक्ष्मीर्यस्मिन् तादृशे, मुकुन्दस्य श्रीकृष्णस्य, मुखमेव चन्दिरः चन्द्रमाः तस्मिन्, चिरं चिरकालं व्याप्य, चकोरायतां चकोर इव आचरतु, चकोरवत् सुधां पिबत्वित्यर्थः । अत्र रूपकोपमयोः संसृष्टिः । पृथ्वीवृत्तं—"जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः" इति लक्षणात् ॥ १ ॥

अये इति ।—अये इति कोमलामन्त्रणे, जलधिनन्दिनी लक्ष्मीः, तस्या नयने एव नीरजे पद्मे, तयोः आलम्बनः आश्रयः तत्सम्बुद्धौ, हे कृष्ण ! इत्यर्थः, प्रभातजलजानां प्रातःकालीनानां पद्मानाम्, उन्नमन् प्रवृद्धिं गच्छन्, यः गरिमा गुरुतरः, गर्वः वयमेव सर्वोत्कर्षेण वर्त्तामहे इत्येव-महङ्कार इत्यर्थः, तस्य सर्वं कृत्स्नं, विभवमिति शेषः, कषन्ति हरन्तीति तथोक्तैः, जितसद्योविकचकमलैरिति भावः, जगतां त्रितयं जगत्त्रितयं त्रिभुवनं, तस्मै रोचन्ते स्पृहयन्ति इति तथाभूतैः, त्रिलोकीमनोहरैरिति

स्मृताऽपि तरुणातपं करुणया हरन्ती नृणाम्
अभङ्गुरतनुत्विषां वलयिता शतैर्विद्युताम् ।
कलिन्दगिरिनन्दिनीतटसुरद्रुमालम्बिनी
मदीयमतिचुम्बिनी भवतु काऽपि कादम्बिनी ॥ ३ ॥

कलिन्दनगनन्दिनीतटवनान्तरं भासयन्
सदा पथि गतागतश्रमभरं हरन् प्राणिनाम् ।
लतावलिशतावृतो मधुरया रुचा सम्भृतो
ममाशु हरतु श्रमानतितरां तमालद्रुमः ॥ ४ ॥

भावः, लोचनैः नयनैः, दृष्टिपातैरिति यावत्, ज्वलतः प्रज्वलनशीलस्य, ज्वलनस्याग्नेः, जित्वरो जेता, यो ज्वरभरः रोगातिभार इत्यर्थः, विषयासङ्गजनित इति भावः, तस्य त्वरया वेगेन, भङ्गुरः विनाशं गच्छन्नित्यर्थः तं, माम् आशु शीघ्रं, शिशिरय शीतलय, मम दुःखातिभारं शमयेति भावः । पृथ्वी वृत्तम् ॥ २ ॥

स्मृतेति ।—स्मृताऽपि स्मरणविषयतां गताऽपि, करुणया कृपया, नृणां मानवानां, तरुणातपं प्रचण्डरौद्रम्, अन्तःसन्तापमिति भावः, हरन्ती नाशयन्ती, अन्या कादम्बिनी दर्शनेन छायया च जनानां सन्तापं हरति, इयन्तु स्मरणमात्रेणापीति व्यतिरेकः ; अभङ्गुराः चिरस्थायिन्य इत्यर्थः, तनुत्विषः शरीरप्रभाः तासामेव, विद्युतां सौदामिनीनां, शतैः वलयिता वेष्टिता, जड़िता इत्यर्थः, अन्या विद्युत् चपला, एतास्तु तनुत्विषश्चिरस्थायिन्य इति व्यतिरेकः ; कलिन्दः सूर्य्य एव, गिरि पर्वतः, तस्य नन्दिनी कन्या, यमुना इत्यर्थः, तस्याः तटेषु तीरेषु, यः सुरद्रुमः देवतरुविशेषः, तम् आलम्बते इति तदालम्बिनी तदाश्रयिणी, काऽपि अनिर्वचनीया, कादम्बिनी मेघमाला, कृष्णमेघ इति भावः, मम इदं मदीया मत्सम्बन्धिनी, मतिः बुद्धिः, चित्तमिति यावत्, तां चुम्बति स्पृशतीति तथोक्ता, मम हृदयविराजिनीत्यर्थः, भवतु । रूपकमलङ्कारः । पृथ्वी वृत्तम् ॥ ३ ॥

कलिन्देति ।—कलिन्दः सूर्य्य एव, नगः पर्वतः, तस्य नन्दिनी तनया, यमुना इत्यर्थः, तस्यास्तटे यानि वनानि तेषाम् अन्तरम् अवकाशं,

जगज्जालं ज्योत्स्नामयनवसुधाभिर्जटिलयन्
जनानां सन्तापं त्रिविधमपि सद्यः प्रशमयन् ।
श्रितो वृन्दारण्यं नतनिखिलवृन्दारकवृतो
मम स्वान्तध्वान्तं तिरयतु नवीनो जलधरः ॥ ५ ॥

ग्रीष्मचण्डकरमण्डलभीषज्वालसंसरणतापितमूर्त्तेः ।
प्रावृषेण्य इव वारिधरो मे वेदनां हरतु वृष्णिवरेण्यः ॥ ६ ॥

---

भासयन् उद्दीपयन्, पथि संसारमार्गे, प्राणिनां सदा गतागतश्रमम् अनवरतयातायातखेदं, हरन् नाशयन्, लतावल्लीनां तनुत्वेन तत्सदृशीनां, गोपाङ्गनानामिति भावः, शतेनावृतः वेष्टितः, मधुरया मनोहारिण्या, रुचा कान्त्या, सम्भृतः संयुक्तः, तमालद्रुमः तमालतरुः, तद्वच्छ्यामरूपो हरिरित्यर्थः, आशु मम श्रमान् संसारमार्गे पुनः पुनः गमनागमनजन्यखेदान्, अतितराम् अतिशयेन, हरतु उन्मूलयतु । रूपकमलङ्कारः । पृथ्वी वृत्तम् ॥ ४ ॥

जगदिति ।—ज्योत्स्नामय्यः कान्तिमय्य इति भावः, नवसुधाः अभिनवामृतानि ताभिः, जगज्जालं भुवनसमूहं, जटिलयन् पूरयन्नित्यर्थः, जनानां त्रिविधमपि त्रिप्रकारमपि, सन्तापं दुःखम्, आध्यात्मिकाधिभौतिकाधिदैविकरूपमिति यावत्, सद्यः झटिति, प्रशमयन् दूरीकुर्वन्, वृन्दारण्यं वृन्दावनं, श्रितः आश्रितः, नतैः प्रणिपतितैः, निखिलवृन्दारकैः समस्तदेवैः, वृतः परिवेष्टितः, नवीनः अपूर्व इत्यर्थः, जलधरः मेघः, कृष्ण इति भावः, मम स्वान्तस्य हृदयस्य, "चित्तन्तु चेतो हृदयं स्वान्तं हृत् मानसं मनः" इत्यमरः ; ध्वान्तं तमः, तिरयतु हरतु । रूपकमलङ्कारः । शिखरिणी वृत्तम् ॥ ५ ॥

ग्रीष्मेति ।— प्रावृषेण्यः प्रावृट्कालभवः, वारिधर इव मेघ इव, वृष्णिवरेण्यः यदुवंशप्रधानः, श्रीकृष्ण इति यावत्, ग्रीष्मचण्डकरमण्डलमिव निदाघकालिकसूर्य्यबिम्बमिव, भीषा भयङ्करी, ज्वाला शिखा यस्य तादृशेन, संसरणेन संसारेण, तापितमूर्त्तेः सन्तप्तदेहस्य, मे मम, वेदनां हरतु । रूपकमलङ्कारः । स्वागता वृत्तं—"स्वागता रनभगैर्गुरुणा च" इति तल्लक्षणात् ॥ ६ ॥

अपारे संसारे विषमविषयारण्यसरणौ
मम भ्रामं भ्रामं विगलितविरामं जड़मतेः।
परिश्रान्तस्यायं तरणितनयातीरनिलयः
समन्तात् सन्तापं हरिनवतमालस्तिरयतु ॥ ७ ॥
आलिङ्गितो जलधिकन्यकया सलीलं
लग्नः प्रियङ्गुलतयेव तरुस्तमालः।
देहावसानसमये हृदये मदीये
देवश्चकास्तु भगवानरविन्दनाभः ॥ ८ ॥
नयनानन्दसन्दोहतुन्दिलीकरणक्षमा।
तिरयत्वाशु सन्तापं काऽपि कादम्बिनी मम ॥ ९ ॥

अपारे इति।—तरणितनया सूर्यसुता, यमुना इत्यर्थः, तस्यास्तीरमेव तीरे इति वा निलयः आश्रयः यस्य तथाभूतः, "तरणितनयातीरनिलये" इत्यपपाठः ; अयं हरिरेव नवतमालः नूतनतमालतरुः, विषमं प्रतिकूलं, विषय एवारण्यं तस्य सरणिः मार्गः तस्मिन्, तत्स्वरूपे इत्यर्थः, अपारे दुस्तरे, संसारे विगलितः विरहितः, विरामो विश्रामो यत्र तत् यथा तथा, भ्रामं भ्रामं पुनः पुनः भ्रमित्वा भ्रमित्वा, जड़मतेः मन्दबुद्धेः, परिश्रान्तस्य क्लान्तस्य, विरक्तस्येति भावः, मम समन्तात् सर्वतः स्थितमित्यर्थः, सन्तापम् आध्यात्मिकादिक्लेशत्रयमिति यावत्, तिरयतु संहरतु। रूपकमलङ्कारः। शिखरिणी वृत्तम् ॥ ७ ॥

आलिङ्गित इति।—प्रियङ्गुलतया तदाख्यसुवर्णवर्णलताविशेषेण, लग्नः संसक्तः, वेष्टित इत्यर्थः, तमालः तरुरिव तमालवृक्ष इव, जलधिकन्यकया लक्ष्म्या, सलीलं सविलासम्, आलिङ्गितः आश्लिष्टः, भगवान् अरविन्दं पद्मं, नाभौ यस्य तथाभूतः पद्मनाभः, देवः श्रीकृष्ण इत्यर्थः, देहावसानसमये मृत्युसमये इत्यर्थः, मम इदं मदीयं तस्मिन् मदीये, हृदये चित्ते, चकास्तु विराजताम्। उपमाऽलङ्कारः। वसन्ततिलकं वृत्तम् ॥ ८ ॥

नयनेति।—नयनानाम् आनन्दसन्दोहः आह्लादातिशयः, तस्य

वाचा निर्मलया सुधामधुरया यां नाथ ! शिक्षामदा-
स्तां स्वप्नेऽपि न संस्मराम्यहमहं-भावावृतो निस्त्रपः ।
इत्यागःशतशालिनं पुनरपि स्वीयेषु मां बिभ्रत-
स्त्वत्तो नास्ति दयानिधिर्यदुपते ! मत्तो न मत्तः परः॥१०॥

पातालं व्रज याहि वा सुरपुरीमारोह मेरोः शिरः
पारावारपरम्परां तर तथाऽप्याशा न शान्ता तव ।
आधिव्याधिपराहतो यदि सदा क्षेमं निजं वाञ्छसि
श्रीकृष्णेति रसायनं रसय रे ! शून्यैः किमन्यैः श्रमैः ?॥११॥

तुन्दिलीकरणे वर्धने, क्षमा शक्ता, काऽपि अनिर्वचनीया, अपूर्वेति भावः, कादम्बिनी कृष्णवर्णा मेघमाला, कृष्ण इति भावः, मम सन्तापं पूर्वोक्तम्, आशु शीघ्रं, तिरयतु नाशयतु । रूपकमलङ्कारः । अनुष्टुप् वृत्तम् ॥ ९ ॥

वाचेति ।—नाथ ! हे प्रभो ! निर्मलया प्रमादादिदोषशून्यया, अत एव सुधामधुरया मोक्षसाधनत्वेन अमृततुल्यया, वाचा वेदरूपया गिरा, यां शिक्षामदाः दत्तवानसि, अहं-भावेन देहादिषु अहमिति ज्ञानेनेत्यर्थः, आवृतः आक्रान्तः, अत एव निस्त्रपः भवदुपदेशविस्मरणात् निर्लज्जः, अहं तां शिक्षां, स्वप्नेऽपि स्वप्नावस्थायामपि, न संस्मरामि स्मृतिविषयीभूतां करोमि, हे यदुपते ! इति इत्थम्, आगःशतशालिनमपि अपराधशत-कारिणमपि,मां पुनः भूयोऽपि, स्वीयेषु स्वकीयदासजनमध्ये, बिभ्रतः गणयतः इत्यर्थः, पालयत इति यावत्, त्वत्तः भवदपेक्षया, परः अन्यः उत्कृष्टश्च, दयानिधिर्नास्ति, मत्तः परः मदन्यः, मत्तः प्रमादान्वितः, कृत्याकृत्यविवेकशून्यः इत्यर्थः, न, अस्तीति शेषः । शार्दूलविक्रीडितं वृत्तम् ॥ १० ॥

पातालमिति ।—पातालं रसातलं, व्रज गच्छ, वा अथवा, सुरपुरीं स्वर्गं, याहि गच्छ, मेरोः सुमेरुगिरेः, शिरः शिखरम्, आरोह उत्तिष्ठ, वा, पारावारपरम्परां सागरसन्ततिं, तर उत्तीर्णो भव, तथाऽपि इत्थं कृतेऽपीत्यर्थः, तव आशा न शान्ता न निवृत्ता, आधिभिर्मनोव्यथाभिः, व्याधिभिः रोगैश्च, पराहतः अभिभूतः सन्, यदि सदा सर्वस्मिन्

गणिकाऽजामिलमुख्यानवता भवता बताहमपि सीदन्।
भवमरुगर्त्ते करुणामूर्ते! न च सर्वथोपेक्ष्यः॥ १२॥

विदित्वेदं दृश्यं विषमरिपुदुष्टं नयनयोः
विधायान्तर्मुद्रामथ सपदि विद्राव्य विषयान्।
विधूयान्तर्ध्वान्तं मधुरमधुरायां चिति कदा
निमग्नः स्यां कस्याञ्चन नवनभस्याम्बुदरुचौ?॥ १३॥

समयि, निजं स्वकीयं, चेमं कुशलं, श्रेय इत्यर्थः, वाञ्छसि इच्छसि, तदा रे! मानव इति शेषः; श्रीकृष्ण इति रसायनं जराव्याधिनाशनम् औषधं, रसय आस्वादय, पिबेत्यर्थः, अपरस्र इति यावत्, शून्यैः विफलैः, अन्यैः श्रमैः आयासैः, किम्? तैः न किमपि साध्यमित्यर्थः। शार्दूलविक्रीडितं वृत्तम्॥ ११॥

गणिकेति।—करुणामूर्त्ते! हे कृपानिधे! इत्यर्थः, बत खेदे, गणिका वेश्या, तथा सह अजामिलः तदाख्यः कश्चित् ब्राह्मणतनयः, मुख्यः प्रधानं येषां तान् अतिदुराचारान् गणिकाऽजामिलप्रभृतीनित्यर्थः, अवता रक्षता, उद्धरता इत्यर्थः, भवता त्वया, भवः संसार एव, मरुगर्त्तः ऊषरप्रदेशस्थगर्तः तस्मिन्, सर्वथा सर्वैः प्रकारैः, सीदन् अवसादं गच्छन्, मज्जन् इत्यर्थः, अहमपि न च उपेक्ष्यः नैव त्याज्य इत्यर्थः। अजामिलोपाख्यानं भागवते षष्ठस्कन्धे प्रथमाध्याये द्रष्टव्यम्। रूपकमलङ्कारः। आर्या वृत्तम्॥ १२॥

विदित्वेति।—नयनयोः चक्षुषोः, इदं दृश्यं चर्मचक्षुषा दर्शनीयं, वस्तुजातमिति शेषः, विषमरिपुभिः दारुणशत्रुभिः, कामादिभिरिति भावः, दुष्टं विदित्वा ज्ञात्वा, अथ अनन्तरम्, अन्तः अन्तःकरणे, मुद्रां समाधिमित्यर्थः, विधाय आस्थाय, सविशेषं पर्य्यालोच्येति भावः, सपदि झटिति, विषयान् भोग्यवस्तूनि, स्रक्चन्दनवनितादीनीत्यर्थः, विद्राव्य दूरीकृत्य, परित्यज्येत्यर्थः, अन्तर्ध्वान्तम् आन्तरं तमः, मोहरूपमिति यावत्, विधूय निरस्य, "विधूतान्तर्ध्वान्तः" इति पाठे—विधूतम् अपास्तम्, अन्तर्ध्वान्तम् आन्तरं तमः येन तथाभूतः सन्, कदा मधुरमधुरायाम् अतिमनोहारिण्यां, नवः नूतनोद्गतः, नभस्याम्बुदः भाद्रमासीयमेघः,

मृद्वीका रसिता सिता समशिता स्फीतं निपीतं पयः
स्वर्यातेन सुधाऽप्यधायि कतिधा रम्भाधरः खण्डितः ।
सत्यं ब्रूहि मदीयजीव ! भवता भूयो भवे भ्राम्यता
कृष्णेत्यक्षरयोरयं मधुरिमोद्गारः क्वचिल्लक्षितः ? ॥ १४ ॥

वज्रं पापमहीभृतां भवगदोद्रेकस्य सिद्धौषधं
मिथ्याज्ञाननिशाविशालतमसस्तिग्मांशुबिम्बोदयः ।
क्रूरक्लेशमहीरुहामुरुतरज्वालाजटालः शिखी
द्वारं निर्वृतिसद्मनो विजयते कृष्णेति वर्णद्वयम् ॥ १५ ॥

"नभस्य-प्रोष्ठपद-भाद्र-भाद्रपदाः समाः" इत्यमरः ; तस्य रुचिरिव रुचिः कान्तिर्यस्याः तादृश्यां, कस्याञ्चन अनिर्वचनीयायां, चिति चित्संज्ञक-परमात्मनि इत्यर्थः,निमग्नः स्याम् ? नितरामाविष्टो भवेयम् ? शिखरिणी वृत्तम् ॥ १३ ॥

मृद्वीकेति ।—हे मदीयजीव ! भूयः पुनः पुनः, भवे संसारे, भ्राम्यता पर्य्यटता, भवता कतिधा कतिवारान्, बहुवारानित्यर्थः, कतिधेति सर्वत्र योज्यं, मृद्वीका द्राक्षा, रसिता आस्वादिता, सिता शर्करा, समशिता सम्भुक्ता, स्फीतं प्रभूतं, पयः दुग्धं, निपीतं निःशेषेण पीतं, स्वर्यातेन स्वर्गं गतेन, सुधाऽपि अमृतमपि, अधायि पीतं, तथा रम्भा नाम सुरसुन्दरी, तस्या अधरः खण्डितः दष्टः, चुम्बित इति भावः, किन्तु सत्यं ब्रूहि कथय, कृष्ण इत्यक्षरयोः वर्णयोर्द्वयोरित्यर्थः, अयम् अनुभूयमानः, मधुरिमोद्गारः माधुर्य्यातिशयः इत्यर्थः, क्वचित् कुत्रचित् प्रदेशे, लक्षितः ? अनुभूतः ? नैवेत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥ १४ ॥

वज्रमिति ।—पापान्येव महीभृतः पर्वताः तेषां, वज्रं वज्रवत् पक्ष-च्छेदकमिति भावः, भवः संसार एव, गदोद्रेकः प्रबलरोगः तस्य, सिद्धम् अमोघमिति यावत्, औषधं भेषजं, शान्तिकरमित्यर्थः, मिथ्याज्ञानमेव निशा रजनी, तस्या विशालं महत्, प्रगाढमित्यर्थः, तमः अन्धकारः तस्य, तिग्मांशुः सूर्यः, तस्य बिम्बं मण्डलं, "बिम्बोऽस्त्री मण्डलं त्रिषु" इत्यमरः ; तस्य उदयः प्रकाशः, मिथ्याज्ञानरूपतिमिरध्वंसनमिति भावः, क्रूरक्लेशाः

रे चेतः! कथयामि ते हितमिदं वृन्दावने चारयन्
वृन्दं कोऽपि गवां नवाम्बुदनिभो बन्धुर्न कार्य्यस्त्वया।
सौन्दर्य्याद्भुतमुद्गिरङ्गिरभितः सम्मोह्य मन्दस्मितै-
रेष त्वां तव वल्लभांश्च विषयानाशु क्षयं नेष्यति॥ १६॥

अव्याख्येयां वितरति परां प्रीतिमन्तर्निमग्ना
कण्ठे लग्ना हरति नितरां याऽऽन्तरध्वान्तजालम्।
तां द्राक्षौघैरपि बहुमतां माधुरीमुद्गिरन्तीं
कृष्णेत्याख्यां कथय रसने! यद्यसि त्वं रसज्ञा॥ १७॥

प्रसरन्तः, ऊर्मयः आध्यात्मिकादयस्त्रयस्तापा एव, महोल्काः बृहत्यः तेषाम्, उरुतराभिः अतिमहतीभिः, ज्वालाभिः शिखाभिः, जटालः जटायुक्तः, शिखावानित्यर्थः, कुण्डलीभूततया समुद्गत इति यावत्, शिखी अग्निः, तापत्रयदहनमिति भावः, निर्वृतिर्मुक्तिरेव, सद्म गृहं तस्य, द्वारं प्रवेशोपायभूतः, कृष्णेति वर्णद्वयम् अक्षरयुगलं, विजयते सर्वोत्कर्षेण वर्त्तते। रूपकमलङ्कारः। शार्दूलविक्रीड़ितं वृत्तम्॥ १५॥

रे इति।—रे चेतः! हृदय! ते तुभ्यम्, इदं वक्ष्यमाणं,हितं कथयामि, त्वया वृन्दावने गवां वृन्दं गोसमूहं, चारयन् पालयन्, भ्रामयन्निति वा, नवाम्बुदनिभः नवजलधरकान्तिः, कोऽपि वाचामगोचर इति यावत्, श्रीकृष्ण इति भावः, बन्धुः न कार्य्यः; कुतः? इत्याह, एषः श्रीकृष्णः, अभितः समन्तात्, सौन्दर्य्याद्भुतं विस्मयजनकसौन्दर्य्यम्, उद्गिरन्, उद्गमन्, प्रकाशयन्नित्यर्थः, मन्दस्मितैः मृदुहसितैः, त्वां भवन्तं, सम्मोह्य मोहयित्वा, तव वल्लभान् प्रियान्, प्रियजनानित्यर्थः, विषयांश्च भोग्यवस्तूनि च, आशु शीघ्रं, क्षयं नाशं, नेष्यति प्रापयिष्यति। शार्दूलविक्रीड़ितं वृत्तम्॥ १६॥

अव्याख्येयामिति।—रसने! हे जिह्वे! यदि त्वं रसं जानासीति रसज्ञा असि रसास्वादकुशला भवसि, तदा या आख्येति भावः, अन्तः अन्तःकरणे, निमग्ना प्रविष्टा सती,अव्याख्येयां प्रकाशयितुमशक्यामित्यर्थः, परां महतीं, प्रीतिं सन्तोषं, वितरति ददाति, तथा कण्ठे लग्ना संसक्ता,

सन्त्येवास्मिन् जगति बहवः पक्षिणो रम्यरूपा-
स्तेषां मध्ये मम तु महती वासना चातकेषु ।
यैरध्यक्षैरथ निजसखं नीरदं स्मारयद्भि-
श्चित्तारूढं भवति किमपि ब्रह्म कृष्णाभिधानम् ॥ १८ ॥

विष्वद्रीच्या भुवनमभितो भासते यस्य भासा
सर्वेषामप्यहमितिविदां गूढमालम्बनं यः ।
तं पृच्छन्ति स्वहृदयमतो वेदिनो विष्णुमन्या-
नन्याय्योऽयं शिव ! शिव ! नृणां केन वा वर्णनीयः ? ॥१९॥

उच्चरिता सतीति यावत्, नितरां अत्यन्तम्, आन्तरध्वान्तजालम् अज्ञानान्धकारसमूहं, हरति नाशयति, द्राक्षाणां फलविशेषाणाम्, ओघैः समूहैरपि, बहुमतां बहुसमादृतां, माधुरीं माधुर्यातिशयम्, उद्गिरन्तीं निःस्रवन्तीं, तां कृष्णेति आख्यां नाम, कथय उच्चारय । मन्दाक्रान्ता वृत्तम् ॥ १७ ॥

सन्तीति ।—अस्मिन् जगति रम्यं रूपं येषां तथाभूताः रमणीयाकारा इत्यर्थः, बहवः प्रभूताः, पक्षिणः सन्त्येव वर्त्तन्ते एव, तु किन्तु, तेषां पक्षिणां, मध्ये मम चातकेषु तदाख्यपक्षिविशेषेषु, महती प्रबला, वासना ग्रहणाभिलाषः, प्रीतिरिति यावत्, अस्तीति शेषः; यैश्चातकैः, अध्यक्षैः अक्षिगोचरतां गतैरित्यर्थः, निजसखं स्वमित्रं, नीरदं मेघं, स्मारयद्भिः सद्भिः, अथानन्तरं, मेघस्मरणानन्तरमित्यर्थः, कृष्णाभिधानं कृष्णाख्यं किमपि अनिर्वचनीयं, ब्रह्म ज्योतिःस्वरूपं वस्तु, चित्तारूढं मनसि आविर्भूतं, भवति । मन्दाक्रान्ता वृत्तम् ॥ १८ ॥

विष्वद्रीच्येति ।—विष्वक् समन्तात्, अञ्चति गच्छतीति विष्वद्रीची सर्वव्यापिनी तया, यस्य भासा प्रभया, प्रकाशरूपचैतन्येन इति यावत्, भुवनम् अभितः समन्तात्, भासते प्रकाशते, "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इति श्रुतौ तस्य भासैव सर्वभानप्रतिपादनात्; यः विष्णुः, सर्वेषां निखिलानाम्, अहमितिविदाम् अहङ्कारात्मकज्ञानवतां, गूढं प्रच्छन्नम्, अर्वाग्दृशां विवेकेन निर्वक्तुमशक्यमिति यावत्, आलम्बनम् आश्रयः, अधिष्ठानमिति यावत्, निरधिष्ठानभ्रमानुत्पत्तेः

सेवायां यदि साभिलाषमसि रे! लक्ष्मीपतिः सेव्यतां
चिन्तायामसि सस्पृहं यदि तदा चक्रायुधश्चिन्त्यताम्।
आलापं यदि वाञ्छसि स्मररिपोर्गाथा तदाऽऽलप्यतां
स्वापं वाञ्छसि चेन्निरर्गलसुखे चेतस्तदा सुप्यताम्॥ २०॥

नवप्रोषप्रौढ़ातपनिवहसन्तप्तवपुषो
बलादुन्मूल्य द्राङ्निगडमविवेकव्यतिकरम्।
विशुद्धेऽस्मिन्नात्माऽमृतसरसि नैराश्यशिशिरे
विगाह्यन्ते दूरीकृतकलुषजाला: सुकृतिनः॥ २१॥

रजतज्ञानाधिष्ठानशुक्तिकावत् सकलाहङ्कारज्ञानाद्यधिष्ठानं ब्रह्म इति भावः, अतः स्वहृदयं वेदिनः स्वहृदयाधिष्ठानत्वेन विष्णुं ज्ञातवन्तोऽपि,जना इति शेषः, अन्यान् जनान्, तं स्वहृदयाधिष्ठानं, विष्णुं पृच्छन्ति जिज्ञासन्ते, कोऽसौ विष्णुरिति ज्ञापनार्थं नियुङ्क्ते इत्यर्थः, शिव! शिव! इति खेदे, अयम् एव व्यवहारः, अन्याय्योऽनुचितः, यतः पृष्टोऽपि तेषां मध्ये केन वा जनेन, स विष्णुर्वर्णनीयो भवेत्? "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" इति श्रुत्या विष्णोर्वाग्विषयत्वस्य प्रतिषेधात् तस्य कथं वर्णनीयता स्यात्? यदर्थं ज्ञापनाय पृच्छा क्रियते इत्यर्थः। मन्दाक्रान्ता वृत्तम्॥ १८॥

सेवायामिति।—रे चेतः! सेवायां परिचर्य्यायां, कस्यापीति शेषः, यदि साभिलाषम् अभिलाषि, असि, तदा लक्ष्मीपतिः नारायणः, सेव्यतां परिचर्य्यतां, नान्य इति भावः, यदि चिन्तायां सस्पृहं साभिलाषम्, असि, तदा चक्रायुधः श्रीकृष्णः, चिन्त्यतां ध्यायतां, यदि आलापं वाञ्छसि अभिलषसि, तदा स्मररिपोः देवदेवस्य हरस्य, गाथा चरितम्, आलप्यतां कीर्त्यतां, स्वापं निद्रां, चेत् यदि, वाञ्छसि अभिलषसि, तदा निरर्गलं निष्प्रतिबन्धं, सुखं यस्मिन् तत्स्वरूपे, परमात्मनि इति भावः, सुप्यतां विषयान्तराभिलाषराहित्येन निश्चेष्टतया स्थीयतामित्यर्थः। शार्दूलविक्रीडितं वृत्तम्॥ २०॥

नवेति।—नवस्य अचिरप्रवृत्तस्य,ग्रीष्मस्य निदाघस्य, प्रौढ़ातपनिवहेन प्रचण्डरौद्रसमूहेन, सन्तप्तं वपुर्येषां तादृशाः, ते प्रसिद्धाः, सुकृतिनः सुधियः, अविवेकव्यतिकरम् अज्ञानसम्बन्धरूपं, निगडं शृङ्खलं, द्राक्

बन्धोन्मुक्त्यै खलु मखमुखान् कुर्वते कर्मपाशान्
अन्तःशान्त्यै मुनिशतमतानल्पचिन्तां भजन्ति ।
तीर्थे मज्जन्त्यशुभजलधेः पारमारोढुकामाः
सर्वं प्रामादिकमिह भवे भ्रान्तिभाजां नराणाम् ॥ २२ ॥
प्रथमं चुम्बितचरणा जङ्घाजानूरुनाभिहृदयानि ।
आलिङ्ग्य भावना मे खेलतु विष्णोर्मुखाब्जशोभायाम् ॥ २३ ॥

शेषं, बलात् बलमाश्रित्य, उन्मूल्य उत्पाट्य, भङ्क्त्वा इत्यर्थः, विशुद्धे कालुष्यादिदोषरहिते, अस्मिन् प्रत्यक्षानुभवविषये, नैराश्येन आशाशून्यतया, शिशिरे शीतले, आनन्दहेतुतया सुखजनके इत्यर्थः, आत्मा अमृतसर इव पीयूषपूर्णसरोवर इव तस्मिन्, दूरीकृतं कलुषरूपं जालं यैः तादृशाः सन्तः, विहायसा गच्छन्तीति विहङ्गाः विहङ्गवत् सञ्चरणशीलाः इत्यर्थः, भवन्तीति शेषः । शिखरिणी वृत्तम् ॥ २१ ॥

बन्धोन्मुक्त्यै इति ।—बन्धस्य उन्मुक्त्यै संसारबन्धनमोचनाय, मखाः यज्ञा एव, मुखः आदिः येषां तान्, यज्ञप्रभृतीनित्यर्थः, कर्मपाशान् बन्धनसाधनरज्जूरित्यर्थः, कुर्वते खलु, जना इति सर्वत्र शेषः । अन्तःशान्त्यै आन्तरमलशान्तये, मुनिशतानां बहूनां मुनीनां, मतेषु अभिमतेषु कर्मस्विति भावः, अनल्पां महतीं, चिन्तां तां, भजन्ति प्राप्नुवन्ति, तथा अशुभम् अमङ्गलमेव, जलधिः समुद्रः तस्य, पारं तीरम्, आरोढुकामाः गन्तुकामा इत्यर्थः, तीर्थे पुण्यक्षेत्रे, मज्जन्ति पतन्ति, स्नान्तीत्यर्थः, इहास्मिन्, भवे संसारे, भ्रान्तिं भजन्ते इति भ्रान्तिभाजः तेषां, नराणां जनानां, सर्वं प्रामादिकम् अनवधानकृतं, भवतीति शेषः, सर्वकर्माणि परित्यज्य आत्मचिन्तानुसरणमेव श्रेयोऽवलम्बनीयमिति भावः । मन्दाक्रान्ता वृत्तम् ॥ २२ ॥

प्रथममिति ।—मे मम, भावना चिन्ता, प्रथमम् आदौ, विष्णोर्नारायणस्य, चुम्बितौ स्पृष्टौ, चरणौ यया तथाभूता, चरणनिपतितेति यावत्, ततः जङ्घा-जानूरु-नाभि-हृदयानि, विष्णोरित्यनुषङ्गः, आलिङ्ग्य स्पृष्ट्वेत्यर्थः, पश्चात् मुखमेवाब्जं कमलं, तस्य शोभा सौन्दर्य्यं तस्यां, खेलतु क्रीडतु । गीतिवृत्तम् ॥ २३ ॥

मलयानिल-कालकूटयोः रमणीकुन्तल-भोगिभोगयोः ।
श्वपचात्मभुवोर्निरन्तरा मम भूयात् परमात्मनिस्थितिः ॥२४॥
निखिलं जगदेव नश्वरं पुनरस्मिन् नितरां कलेवरम् ।
अथ तस्य कृते कियानयं क्रियते हन्त ! जनैः परिश्रमः ॥२५॥
प्रतिपलमखिलान् लोकान् मृत्युमुखं विशतोऽपि निरीक्ष्य ।
हा ! हन्त ! किमु चित्तं विरमति नाद्यापि विषयेभ्यः ? ॥२६॥

सपदि विलयमेतु राज्यलक्ष्मी-
रुपरि पतन्त्वथवा कृपाणधाराः ।
अपहरतुतरां शिरः कृतान्तो
मम तु मतिर्न मनागपैतु धर्मात् ॥ २७ ॥

मलयेति ।—मलयानिलः मलयपवनः, कालकूटं हालाहलं तयोः, रमण्याः कुन्तलः केशपाशः, भोगिभोगः सर्पदेहः तयोः, तथा श्वपचश्चाण्डालः, आत्मभूः ब्रह्मा तयोः, निरन्तरा निर्विशेषा, मम परमात्मनिस्थितिः परमात्मज्ञानं, भूयात्, "सर्वं खल्विदं ब्रह्म" इति श्रुतेः । आशीर्लिङ् । सुन्दरी वृत्तम् ॥ २४ ॥

निखिलमिति ।—निखिलमेव जगत् नश्वरं नाशशीलम्, अस्मिन् नश्वरे जगति, कलेवरं पुनः देहोऽपि, नितरां सुतराम्, अत्यर्थमित्यर्थः, नश्वरमित्यनेनान्वयः, अतस्तत्कृते क्लेशस्वीकरणमनुचितमेवेति भावः ; अथ पक्षान्तरे, हन्त इति खेदे, तस्य कलेवरस्य, कृते निमित्तं, जनैः अयम् ईदृशः, महान् इति भावः, कियान् परिश्रमः आयासः, क्रियते । सुन्दरी वृत्तम् ॥ २५ ॥

प्रतिपलमिति ।—हा हन्तेति खेदातिशयसूचकं पदद्वयम्, इह संसारे, प्रतिपलं प्रतिक्षणमिति यावत्, अखिलान् सर्वान्, लोकान् जनान्, मृत्युमुखं विशतः प्रविशतः, निरीक्ष्यापि दृष्ट्वाऽपि, चित्तं हृदयम्, अद्यापि विषयेभ्यः स्रक्चन्दनवनितादिभोग्यद्रव्येभ्यः, किं कथं, नु वितर्के, न विरमति ? न निवर्तते ? विरतिरुचितैवेति भावः । आर्य्या वृत्तम् ॥ २६ ॥

सपदीति ।—राज्यलक्ष्मीः सपदि सहसा, विलयं नाशम्, एतु प्राप्नोतु,

अपि बहुलबलमूर्द्धनि रिपुरेव निरन्तरं भ्रमतु ।
पातयतु वाऽसिधारामहमणुमात्रं न किञ्चिदपभाषे ॥ २८ ॥

तरणोपायमदृष्ट्वा खलु मामक जीव ! ताम्यसि कुतस्त्वम् ? ।
चेतःसरणौ किन्ते नायाति कदाऽपि नन्दसुतः ? ॥ २९ ॥

श्रियो मे मा सन्तु क्षणमपि च माद्यद्गजघटा-
मदभ्राम्यद्भृङ्गावलिमधुरझङ्कारसुभगाः ।
निमग्नानां यासु द्रविणरसपर्य्याकुलधियां
मनः सेवाकार्य्यैर्हरिचरणयोर्नैव रमते ॥ ३० ॥

अथवा कृपाणधाराः तीक्ष्णखड्गप्रहाराः,उपरि,मम शरीरस्येति शेषः, पतन्तु, कृतान्तः यमः, शिरः मस्तकम्, अपहरतुतराम् अतिशयेनापहरतु, छिनत्त्विति यावत्, तु किन्तु, मम मतिः चित्तं, धर्मात् मनाक् अल्पमपि, न अपैतु नापगच्छतु । पुष्पिताग्रा वृत्तम्—"अयुजि नयुगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रा" इति लक्षणात् ॥ २७ ॥

अपीति ।—रिपुः शत्रुः, बहुलानां प्रभूतानां, बलानां सैन्यानां, मूर्द्धनि अग्रतः, निरन्तरमपि सततमपि, भ्रमतु एव विचरतु एव, असिधारां तीक्ष्णकृपाणप्रहारं, पातयतु निक्षिपतु वा, अहम् अणुमात्रम् अल्पमात्रमपि, किञ्चित् न अपभाषे न कटुभाषया तमाक्षिपामीति यावत्; आत्मज्ञानात् मम न कस्मिन्नपि विरुद्धभाव इति भावः ॥ २८ ॥

तरणोपायमिति ।—हे मामक-जीव ! त्वं तरणस्य उद्धारस्य, उपायम् अदृष्ट्वा अपश्यन्, कुतः कस्मात्, ताम्यसि ? क्लाम्यसि ? खलु, ते तव, चेतःसरणौ हृदयमार्गे, नन्दसुतः श्रीकृष्णः, कदाऽपि किं न आयाति ? नोपतिष्ठते ? नन्दसुतं चिन्तय, ते सन्तापो नाशं गमिष्यतीति भावः । आर्य्या वृत्तम् ॥ २९ ॥

श्रिय इति ।—माद्यन्तीनां मदस्राविणीनां, गजघटानां हस्तिसमूहानां, मदेषु मदजलेषु, भ्राम्यन्त्यः विचरन्त्यः, या भृङ्गावलयः मधुकरश्रेण्यः, तासां मधुरेण मनोज्ञेन, झङ्कारेण गुञ्जनेनेति यावत्, सुभगाः प्रीतिकर्य्य इत्यर्थः, श्रियः सम्पदः, मे मम, क्षणमपि च मा सन्तु न भवन्तु; कुतः ? इत्याह, निमग्नानामिति ।—यासु श्रीषु, निमग्नानाम्

किं निःशङ्कं शेषे ? शेषे वयसः समागतो मृत्युः।
अथ वा सुखं शयीथा निकटे जागर्त्ति जाह्नवी जननी ॥ ३१॥
सन्तापं किं कलयसि धावं धावं धरातले हृदय !।
अस्ति मम शिरसि सततं नन्दकुमारः प्रभुः परमः ॥ ३२ ॥
रे रे मनो ! मम मनोभवशातनस्य
पादाम्बुजद्वयमनारतमानम त्वम्।
किं मां निपातयसि संसृतिगर्त्तमध्ये ?
नैतावता तव गमिष्यति पुत्रशोकः ॥ ३३ ॥

अन्तःप्रविष्टानाम्, अत्यर्थमासक्तानामिति भावः, अत एव द्रविणानां धनानां, रयेण वेगेन, मर्द्देनेति यावत्, पर्य्याकुला विपर्य्यस्ता, धीर्य्येषां तादृशानां, जनानामिति शेषः,मनः हरिचरणयोः सेवाकार्य्ये परिचर्य्यायां, नैव रमते नैव सक्तं भवतीत्यर्थः। अत्र परार्द्धवाक्यस्य पूर्वार्द्धवाक्यहेतुत्वात् काव्यलिङ्गमलङ्कारः,—"हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते" इति लक्षणात्। शिखरिणी वृत्तम् ॥ ३० ॥

किमिति।—निःशङ्कं यथा तथा किं कथं, शेषे ? शयनं करोषि ? वयसः शेषे परिणामे, मृत्युः समागतः, भवतीति शेषः; अथवा सुखं निःशङ्कमित्यर्थः, शयीथाः शयनं कुरु,निकटे जननी माता, जाह्नवी गङ्गा, जागर्त्ति राजते, गङ्गातीरवर्त्तिनो मरणानन्तरं नरकभयं नास्तीति भावः। गीति वृत्तम् ॥ ३१ ॥

सन्तापमिति।—हे हृदय ! धरातले पृथिव्यां, संसारे इत्यर्थः, धावं धावं भ्रामं भ्रामं, पुनः पुनर्गतागतं कृत्वेत्यर्थः, किं कथं, सन्तापं क्लेशं, कलयसि ? विवेचयसि ? इत्यर्थः, मम शिरसि परमः प्रभुः परमेश्वरः, नन्दकुमारः श्रीकृष्णः, सततं निरन्तरम्, अस्ति, नन्दसुते शिरसि स्थिते न पुनः पुनरावृत्तिर्भवेदिति भावः। आर्य्या वृत्तम् ॥ ३२ ॥

रे रे इति।—रे रे मम मनः ! त्वम् अनारतम् अनवरतं, मनोभवशातनस्य स्मरहरस्य, शिवस्येत्यर्थः, पादाम्बुजद्वयं चरणकमलयुगलम्,आनम प्रणम, अभिवन्दस्व इति भावः, संसृतिः संसार एव, गर्त्तः तस्य मध्ये

मरकतमणिमेदिनीप्ररोहस्तरुणतरस्तरुरेष वा तमालः ।
रघुपतिमवलोक्य तत्र दूरादृषिनिकरैरिति संशयस्तदाऽऽपि ॥ ३४ ॥

तरणितनया किं स्यादेषा ? न तोयमयी हि सा
मरकतमणिज्योत्स्ना वा स्यात् ? न सा मधुराकृतिः ।
इति रघुपतेः कायच्छायाविलोकनकौतुकैः
वनवसतिभि: कैः कैराटौ न सन्दिदिहे जनैः ? ॥ ३५ ॥

कथं, मां निपातयसि ? निक्षिपसि ? एतावता मां संसारगर्त्ते निपातनेनेत्यर्थः, तव पुत्रशोकः काममरणजन्यशोकः, कामस्य मनोभवत्वादिति भावः, न गमिष्यति, अहं तव पुत्रस्य कामस्य हन्तुः सेवक इति बुद्धा मत्पातने तव पुत्रशोकशान्तिर्नैव भविष्यतीति भावः । वसन्ततिलकं वृत्तम् ॥ ३३ ॥

मरकतेति ।—तदा तत्काले, रामस्य वनभ्रमणकाले इति भावः, तत्र आश्रमसन्निधौ, ऋषिनिकरैः मुनिसमूहैः, रघुपतिं रामं, दूरात् अवलोक्य दृष्ट्वा, एषः मरकतमणिमेदिनीप्ररोहः ? हरिन्मणिमयखनिसमुत्थिताङ्कुरः ? वा अथवा, तरुणतरः अतिशयेन नवीनः, तमालः तरुः ? इति संशयः सन्देहः, आपि प्राप्तः । अत्र प्रकृते रघुपतौ अन्यस्य संशयात् सन्देहालङ्कारः,—"सन्देहः प्रकृतेऽन्यस्य संशयः प्रतिभोत्थितः" इति लक्षणात् । पुष्पिताग्रा वृत्तम् ॥ ३४ ॥

तरणीति ।—रघुपतेः रामस्य, कायच्छायायाः, अङ्गकान्तेः, विलोकने दर्शने, कौतुकं कौतूहलं येषां तादृशैः, कैः कैः वनवसतिभिः अरण्यनिवासिभिः,जनैः आदौ अग्रतः,परिचयात् निकटागमनात् वा प्रागिति भावः, एषा कायाच्छाया, तरणितनया यमुना, किं स्यात् ? न, हि यतः, सा तरणितनया, तोयमयी जलमयी, इयन्तु न तथेति भावः वा अथवा, मरकतमणिज्योत्स्ना हरिन्मणिप्रभा इति यावत्, स्यात् ? सा मरकतमणिज्योत्स्ना, मधुराकृतिः मनोहरमूर्त्तिः, न, इयन्तु मधुराकृतिरिति भावः, इतीत्थं, न सन्दिदिहे ? न संशिश्ये ? अपि तु सर्वैरेव सन्दिदिहे इत्यर्थः । अत्र निश्चयगर्भः सन्देहः । हरिणी वृत्तं—"नसमरसला गः षड्वेदैर्हयैर्हरिणी मता" इति लक्षणात् ॥ ३५ ॥

चपला जलदाच्युता ? लता वा तरुमुख्यादिति ? संशये निमग्नः
गुरुनिश्वसितैः कपिर्मनीषी निरणैषीदथ तां वियोगिनीति ॥३६॥

भूतिर्नीचगृहेषु विप्रसदने दारिद्र्यकोलाहलो
नाशो हन्त ! सतामसत्फलजुषामायुः समानां शतम् ।
दुर्नीतिं तव वीक्ष्य कोपदहनज्वालाजटालोऽपि सन्
किं कुर्वे ? जगदीश ! यत् पुनरहं दीनो भवानीश्वरः ॥३७॥

आ-मूलाद्रत्नसानोर्मलयवलयितादा-च कूलात् पयोधेः
यावन्तः सन्ति काव्यप्रणयनपटवस्ते विशङ्कं वदन्तु ।

चपलेति।—जलदान्मेघात्, च्युता भ्रष्टा, चपला ? विद्युत् ? वा अथवा, तरुमुख्यात् द्रुमश्रेष्ठात्, सहकारवृक्षादिति भावः, च्युतेत्यनुषङ्गः, लता ? इति ईदृशे, संशये निमग्नः निपतितः, मनीषी बुद्धिमान्, कपिः हनुमान्, ताम् अशोकवनस्थां कामिनीमिति भावः, गुरुनिश्वसितैः विषादजनितदीर्घ-निश्वासैः, वियोगिनीति पतिविच्छेदविधुरा सीतेति, निरणैषीत् निश्चिकाय। अत्रापि सन्देहालङ्कारः। मालभारिणी वृत्तम् ॥ ३६ ॥

भूतिरिति।—नीचानाम् अधमानां, दुर्जनानामिति भावः, गृहेषु भूतिः सम्पत्, "भूतिर्भस्मनि सम्पदि" इत्यमरः; विप्राणां ब्राह्मणानां, सुजनानामिति भावः,सदने गृहे,दारिद्र्येण निर्धनत्वेन,कोलाहलः कलकल-ध्वनिः, करुणविलापध्वनिः इति यावत्, हन्त ! खेदे, सतां साधूनां, नाशः अकालमृत्युरित्यर्थः, असत्फलजुषां दुर्वृत्तानामित्यर्थः, आयुः जीवनकालः, समानां वत्सराणां, शतं, दुर्जनाः दीर्घं शतवर्षं जीवन्तीति भावः, हे जगदीश ! तव दुर्नीतिम् इत्थं दुष्टनियमं, वीक्ष्य दृष्ट्वा, पर्य्यालोच्येति यावत्, कोप एव दहनः अग्निः, तस्य ज्वालाभिः शिखाभिः, जटालः जटावान्, परीत इति भावः, सन्नपि किं कुर्वे ? किं कर्त्तुं शक्नोमि ? नैव किमपि कुर्वे इत्यर्थः, अहमिति शेषः, यत् यतः, अहं दीनः दरिद्रः, तवाकार्य्यप्रतीकारासमर्थ इत्यर्थः,भवान् पुनः ईश्वरः सर्वशक्तिमानित्यर्थः। शार्दूलविक्रीडितं वृत्तम् ॥ ३७ ॥

आ-मूलादिति।—रत्नसानोः सुमेरोः, आ-मूलात् मूलादारभ्य, मलय-

मृद्वीकामध्यान्निर्यन्मसृणमदधुरीमाधुरीभाग्यभाजां
वाचामाचार्यतायाः पदमनुभवितुं कोऽस्ति धन्यो मदन्यः ?॥३८॥

गिरां देवी वीणागुणरणनहीनादरकरा
यदीयानां वाचाममृतमयमाचामति रसम्।
वचस्तस्याकर्ण्य श्रवणसुभगं पण्डितपते-
रधुन्वन् मूर्द्धानं नृपशुरथ वाऽयं पशुपतिः ॥ ३९ ॥

---

वलयितात् मयलाद्रिवेष्टितात्, पयोधेः समुद्रस्य, आ-कूलात् च कूलपर्य्यन्तञ्च, यावन्तः यावत्सङ्ख्यकाः, काव्यप्रणयने काव्यविरचने, पटवः दक्षाः, पण्डिता इति शेषः, सन्ति वर्त्तन्ते, ते विशङ्कं निःशङ्कं यथा तथा, वदन्तु कथयन्तु, मृद्वीका द्राक्षा, तस्या मध्यात् अभ्यन्तरात्, निर्यतो निःसरतः, मसृणस्य स्वच्छस्येत्यर्थः, मदस्य सुधायाः, या धुरी उत्कृष्टा इत्यर्थः, माधुरी मधुरता, तस्या भाग्यं भजन्ते इति तथोक्तानां, वाचां भारतीनाम्, आचार्य्यतायाः गुरुतायाः, पदं स्थानम्, अनुभवितुं भोक्तुं, मदन्यः मत्तोऽपरः, को धन्यः पुण्यवान् श्लाघ्यो वा, अस्ति ? वर्त्तते ? न कोऽप्यस्तीति भावः। कवेरहङ्कारोक्तिरियम्। स्रग्धरा वृत्तं—“म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयम्” इति लक्षणात् ॥ ३८ ॥

गिरामिति।—गिरां वाचां, देवी सरस्वतीत्यर्थः, वीणागुणस्य विपञ्चीतन्त्र्याः, रणने रणत्कारे, भणत्कारे इत्यर्थः, वादने इति यावत्, हीनः ह्रासं गतः, आदरो यस्य तादृशः, करो यस्याः तथाभूता सती, वीणावादने हतादरा सतीति यावत्, यस्य इमाः यदीयाः तासां यत्सम्बन्धिनीनामित्यर्थः, वाचां भारतीनाम्, अमृतमयं सुधोपमं, रसम् आचामति पिबति, सादरमाकर्णयतीति भावः, पण्डितपतेः पण्डिताग्रगण्यस्य, तस्य ममेति भावः, श्रवणसुभगं श्रुतिमधुरं, वचः आकर्ण्य श्रुत्वा, मूर्द्धानं शिरः, अधुन्वन् अकम्पयन्, विस्मयानाविष्टतया अचालयन्निति यावत्, जन इति शेषः, ना पशुरिव नृपशुः मूढः, अथवा अयं पशुपतिः गोपालः, शिवः सहृदयस्तु विस्मयात् शिरश्चालयत्येवेति भावः। शिखरिणी वृत्तम् ॥ ३९ ॥

मद्वाणि ! मा कुरु विषादमनादरेण
मात्सर्य्यमग्नमनसां सहसा खलानाम्।
काव्यारविन्दमकरन्दमधुव्रतास्त्वा-
मास्येषु धास्यसितमां कियतो विशालान्॥ ४०॥

विद्वांसो वसुधातले परवचःश्लाघासु वाचंयमा
भूपालाः कमलाविलासमदिरोन्मीलन्मदाघूर्णिताः।
आस्ये धास्यति कस्य लास्यमधुना धन्यस्य कामालस-
स्वर्वामाभ्रूममाधुरीं विधुरयन् वाचां विलासो मम॥ ४१॥

मद्वाणीति।—मद्वाणि ! हे मम वचः ! मात्सर्य्ये अन्यशुभद्वेषे, "मत्सरोऽन्यशुभद्वेषः" इत्यमरः; मग्नं प्रविष्टम्, आसक्तमिति यावत्, मनो येषां तथाविधानां, खलानां दुर्जनानाम्, अनादरेण अवज्ञया, सहसा विषादं दुःखं, मा कुरु न अनुभव इत्यर्थः, त्वम् आस्येषु वदनेषु, काव्यमेव अरविन्दं पद्मं, तस्य मकरन्दः मधु, तस्य मधुव्रतान् भ्रमरान्, कियतः कतिसङ्ख्यकान्, बहूनिति भावः, विशालान् महतः, सहृदयानिति भावः, धास्यसितमाम् अतिशयेन धास्यसि, धारयिष्यसि इत्यर्थः, अत्र कर्त्तृ-कर्म-विपरिणामेन विवक्षयात् सहृदया विद्वांसस्त्वां वदनेषु धारयिष्यन्ति इति तात्पर्य्यम्। वसन्ततिलकं वृत्तम्॥ ४०॥

विद्वांस इति।—वसुधातले पृथिव्यां,विद्वांसः पण्डिताः,परेषाम् अन्येषां, वचांसि वाक्यानि, तेषां श्लाघासु प्रशंसासु, वाचंयमाः मौनिनः, प्रायेण दृश्यन्ते इति शेषः, भूपालाः राजानः, यैः गुणिगुणग्रहणं कर्त्तव्यमिति भावः, कमलायाः लक्ष्म्याः, विलासः विस्फुरणं, स एव मदिरा मद्यं, तेन उन्मीलन् उन्मिषन्, प्रकटीभवन्नित्यर्थः, यो मदः मत्तता, तेन आघूर्णिताः विभ्रान्ताः, विवेकविरहिता इति भावः, प्रायेण भवन्तीति शेषः, अतः कामेन अलसाः मन्थराः, याः स्वर्वामाः सुरसुन्दर्य्यः, तासां भ्रूममाधुरीम् अतिमाधुर्य्यं, विधुरयन् न्यक्कुर्वन्, धन्यस्य सुकृतिनः, श्लाघ्यस्य वा, मम

मधु द्राक्षा साक्षादमृतमथ वामाऽधरसुधा
कदाचित् केषाञ्चित् खलु हि विदधीरन्नपि मुदम् ।
ध्रुवं ते जीवन्तोऽप्यहह !! मृतका मन्दमतयो
न येषामानन्दं जनयति जगन्नाथभणितिः ॥ ४२ ॥

निर्माणे यदि मार्मिकोऽसि नितरामत्यन्तपाकद्रवन्-
मृद्वीकामधुमाधुरीमदपरीहारोद्धुराणां गिराम् ।
काव्यं तर्हि सखे ! सुखेन कथय त्वं सम्मुखे मादृशां
मा चेद्दुष्कृतमात्मना कृतमिव स्वात्मादूबहिर्मा कथाः ॥ ४३ ॥

वाचां विलासः शोभा, अधुना कस्य जनस्य, आस्ये वदने, लास्यं नृत्यं, धास्यति ? धारयिष्यति ? करिष्यति ? इत्यर्थः ; गुणग्राहिजनासद्भावात् न कस्यापीति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ४१ ॥

मध्विति ।—मधु क्षौद्रं, द्राक्षा फलविशेषः, साक्षात् प्रत्यक्षं, प्रकृतमिति यावत्, अमृतं सुधा, अथ अथवा, वामानां सुन्दरीणाम्, 'अधरसुधा अधरामृतम्, एतानि केषाञ्चित् जनानां, कदाचिदपि मुदं प्रीतिं, विदधीरन् खलु हि जनयेयुः, न तु सर्वेषामिति भावः, किन्तु जगन्नाथस्य कवेः मम, भणितिः वाणी, येषां जनानाम्, आनन्दं न जनयति न उत्पादयति, अहह !! खेदे, ते मन्दमतयः मूढधियः, जीवन्तोऽपि ध्रुवं निश्चयेन, मृतकाः मृता एव, स्वार्थे क-प्रत्ययः ; मध्वादिभ्योऽपि जगन्नाथकविकृतं काव्यमिदं मधुरमिति तात्पर्य्यार्थः । शिखरिणी वृत्तम् ॥ ४२ ॥

निर्माणे इति ।—अत्यन्तपाकेन अतिपरिणामेन, सुपक्वतयेत्यर्थः, द्रवन्त्याः स्रवन्त्याः, मृद्वीकायाः द्राक्षायाः, या मधुमाधुरी मधुसममाधुर्य्यं, तया हेतुना यः मदः गर्वः, तस्य परीहारे निवर्त्तने, उद्धुराः समर्थाः इति यावत् तादृशीनां, गिरां वाचां, निर्माणे विरचने, यदि नितराम् अत्यर्थं, मर्म जानातीति मार्मिकः मर्मज्ञः, असि भवसि, तर्हि तदा, हे सखे ! त्वं मादृशां मद्विधानां, सम्मुखे सुखेन काव्यम् अन्यकविप्रणीतमलौकिक-

माधुर्य्यैरपि धुर्य्यैर्द्राक्षाक्षीरेक्षुमाक्षिकादीनाम्।
वन्ध्यैव माधुरीयं पण्डितराजस्य कवितायाः॥ ४४॥

शास्त्राण्याकलितानि नित्यविधयः सर्व्वेऽपि सम्भाविता:
दिल्लीवल्लभपाणिपल्लवतले नीतं नवीनं वयः।
सम्प्रत्युज्झितमासनं मधुपुरीमध्ये हरिः सेव्यते
सर्व्वं पण्डितराजराजितिलकेनाकारि लोकाधिकम्॥ ४५॥

चमत्कारिवाक्यमित्यर्थः, कथय ब्रूहि, चेत् यदि, मा न, कथयसीति शेषः, यद्वा—मा चेत् यदि न मार्म्मिकोऽसीत्यर्थः, तदा आत्मना कृतं दुष्कृतमिव पापमिव, स्वान्तात् मनसः, "स्वान्तं हृन्मानसं मनः" इत्यमरः; वहिः मा कृथाः न प्रकाशयेत्यर्थः; कविताया रसज्ञाना-भावादिति भावः; एतेन मदीयकाव्यसमं काव्यमन्यत् नास्तीति तात्पर्य्यम्। शार्दूलविक्रीड़ितं वृत्तम्॥ ४३॥

माधुर्य्यैरिति।—पण्डितानां राजा पण्डितराजः तस्य पण्डिताग्र-गण्यस्येत्यर्थः, मम जगन्नाथस्य इति भावः, कवितायाः धुर्य्यैः धुरन्धरैः, अत्युत्कृष्टैरित्यर्थः, माधुर्य्यैः मधुरताभिः, द्राक्षाक्षीरेक्षुमाक्षिकादीनां मधुरत्वेन प्रसिद्धानामिति भावः, इयं सर्व्वजनानुभूयमानेत्यर्थः, माधुरी वन्ध्यैव विफलेव, तुच्छेवेत्यर्थः, द्राक्षादिभ्योऽपि मदीयं काव्यं मधुरमिति भावः। आर्य्या वृत्तम्॥ ४४॥

शास्त्राणीति।—पण्डितराजानां विद्वत्प्रवराणां, राजिः समूहः, तस्य तिलकेन ललाटभूषणेनेति यावत्, मया जगन्नाथेनेति भावः, शास्त्राणि श्रुति-स्मृत्यादीनि, आकलितानि शिक्षितानि, सर्व्वेऽपि नित्यविधयः अवश्य-करणीयकर्म्माणि, सम्भाविताः समादृताः, अनुष्ठिताः इति भावः, तथा दिल्लीवल्लभस्य दिल्लीश्वरस्य, पाणिपल्लवतले करकिशलयप्रदेशे, नवीनं वयः यौवनमित्यर्थः, नीतम् अतिवाहितं, यौवने दिल्लीश्वरस्य सभापण्डितत्वेन अवस्थितमिति भावः, सम्प्रति अधुना, वार्द्धके इति भावः, आसनं तत्सभापण्डितपदमित्यर्थः, उज्झितं त्यक्तं, तथा मधुपुरीमध्ये मथुरामध्ये, स्थित्वेति शेषः, हरिः श्रीकृष्णः, सेव्यते आराध्यते, अतः सर्व्वं लोकाधिकम् अलौकिकं कर्म्म, अकारि कृतम्। शार्दूलविक्रीड़ितं वृत्तम्॥ ४५॥

दुर्वृत्ता जारजन्मानो हरिष्यन्तीति शङ्कया ।
मदीयपद्यरत्नानां मञ्जूषैषा मया कृता ॥ ४६ ॥

इति श्रीमत्पण्डितराज-जगन्नाथविरचिते भामिनीविलासे
शान्तो नाम चतुर्थो विलासः ।

सम्पूर्णमिदम् ।

दुर्वृत्ता इति ।—दुर्वृत्ताः दुश्चरिताः, जारजन्मानः जारजाः, जनाः इति शेषः, हरिष्यन्ति चोरयिष्यन्ति, इति शङ्कया भयेन, मदीयपद्यरत्नानां मत्कृतमणिसदृशमहामूल्यश्लोकानाम्, एषा इयं, मञ्जूषा पेटिकारूप-वस्तुविशेषः, मया कृता रचिता, भामिनीविलासं नाम काव्यं मञ्जूषारूप-मिति तात्पर्य्यम् । अनुष्टुप् वृत्तम् ॥ ४६ ॥

इति पण्डितकुलपतिना बि, ए, उपाधिधारिणा
श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण
विरचिता भामिनीविलासव्याख्या समाप्ता ।

समाप्तोऽयं ग्रन्थः ।